इदन्ते केनोक्तं कथय कमलातङ्कवदने यदेतस्मिन्हेम्नः कटकमिति धत्से खलु धियं ॥ इदं तद्दुःसाधाक्रमणपरमास्त्रं स्मृतिभुवा तव प्रीत्या चक्रं करकमलमूले विनिहितं॥

अत्र कामस्य चक्रं लोकेऽप्रसिद्धं॥

उपपरिसरं गोदावर्य्याःपरित्यजताध्वगाः सरणिमपरो मार्गस्तावद्भवद्भिरिहेष्यतां । इहहि विहितोरक्ताशोकः कयापिहताशया चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः॥

पादाघातेनाशोकस्य पुष्पोद्गमःकविषुप्रसिद्धो नपुनरङ्कुरोद्गमः॥

सुसितवसनालंकारायां कदाचन कौमुदी महसि सुदृशि स्वैरंयान्त्यांगतोस्तमभूद्विधुः । तदनु भवतः कीर्त्तिः केनाप्यगीयत येन साप्रियगृहमगान्मुक्ताशङ्काक नासि शुभप्रदः॥

अत्रामूर्त्तापि कीर्त्तिः ज्योत्स्नावत्प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टं॥

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः। नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च॥

ग्रहोपरागं विना रात्रौ स्नानंधर्म्मशास्त्रेण विरुद्धं॥

अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते। षाड्गुण्यानुसृतिस्तस्य सत्यं सा निष्प्रयोजना॥

एतदर्थशास्त्रेण॥

विधाय दूरे केयूरमनङ्गाङ्गणमङ्गना । बभार कान्तेन क्षतां करजोल्लेखमालिकां ॥

अत्र केयूरपदे नखक्षतं न निहितमित्येतत्का मश्लेषेण ॥

अष्टाङ्गयोगपरिशीलनकीलनेन दुःसाधसिद्धिसविधं विद धद्दिदूरे । आसादयन्नभिमतामधुना विवेकख्यातिं समाधि धनमौलिमणिर्विमुक्तः ॥

अत्र विवेकख्यातिस्ततःसंप्रज्ञातसमाधिः पश्चा दसंप्रज्ञातस्ततोमुक्तिर्नतु विवेकख्यातौ ॥ एवं विद्यान्तरैरपि विरुद्धमुदाहार्य्यं ॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किं दत्तं पदं शिरसि विद्विषतां ततः किं । सन्तर्पिताः प्रणयिनोविभवैस्ततः किं कल्पं स्थितं तनुभृतां तनुभिस्ततः किं ॥

अत्र ततः किमिति न नवीकृतं । तत्तु यथा ॥

यदि दहत्यनलोत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः । लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषा दिता ॥ यत्रानुल्लिखिताक्षमेव निखिलं निर्म्माणमेतद्विधेरुत्क र्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः पराः । याताः प्राण भृतां मनोरथगतीरुल्लङ्घ्य यत्संपदस्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितं ॥

अत्र छायामात्रमणीकृताश्मसुमणेस्तस्याश्मतै वोचितेति सनियमत्वंवाच्यं ॥

वक्ताम्भोजं सरस्वत्यधिवसति सदा शोणएवाधरस्ते वाहुः काकुत्स्थवीर्य्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः। वाहिन्यः पार्श्व मेताः क्षणमपि भवतोनैव मुञ्चत्यभीक्ष्णं स्वच्छेन्तर्मानसेऽस्मिन् कथमवनिपते तेऽम्बुपानाभिलाषः ॥

अत्र शोणएवेति नियमेन वाच्यः॥

श्यामां श्यामलिमानमानयतभोः सान्द्रैर्मषीकूर्चकैर्मन्त्रं तन्त्र मथप्रयुज्यहरत श्वेतोत्पलानां श्रियं। चन्द्रंचूर्णयतक्ष णाच्च कणशःकृत्वा शिलापट्टके येन द्रष्टुमहं क्षमे दशदिशस्तद्वक्तमुद्राङ्किताः॥

अत्र ज्योत्स्नामिति श्यामाविशेषोवाच्यः॥

कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नान्यमूनिमकरालयमावमंस्थाः। किं कौस्तुभेन विहितोभवतोननाम याच्ञा प्रसारित करः पुरुषोत्तमोपि ॥

अत्र एकेन किं न विहितोभवतः सनामेति सामान्यं वाच्यं ॥

अर्थित्वे प्रकटीकृतेपि न फलप्राप्तिः प्रभोः प्रत्युत द्रुह्यन्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया। उत्कर्षञ्च परस्यमान

यशसोर्विस्रंसनं चात्मनः क्षीरत्नञ्च जगत्पतिर्दशमुखोदेवः कथं मृष्यते॥

अत्र क्षीरत्नमुपेक्षितुमित्याकाङ्क्षति। नहि परस्येत्यनेन सम्बन्धोयोग्यः॥

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी। उत्पत्तिर्द्रुहिणान्वये च तदहो तादृग्वरोलभ्यते स्याच्चेदेष न रावणः क्व नु पुनः सर्व्वत्र सर्वेगुणाः॥

अत्र स्याच्चेदेषन रावणइत्यन्त एव समाप्यं॥

श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा। निशा शशाङ्केन धृतिः समाधिना नयेन चालंक्रियते नरेन्द्रता॥

अत्र श्रुतादिभिरुत्कृष्टैः सहचरितैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वं लग्नं रागावृताङ्गीत्यत्रविदितं तेस्त्वित्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते॥

प्रयत्नपरिबोधितःस्तुतिभिरद्य शेषे निशामकेशवमपाण्डवं भुवनमद्य निःसोमकं। इयं परिसमाप्यते रणकथाद्य दोःशालिनामपैतु रिपुकाननातिगुरुरद्य भारोभुवः॥

अत्र शयितः प्रयत्नेन बोध्यसे इति विधेयं ॥ यथा वा॥

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः तेपि क्रूरचमूरुचर्म्मवसनैर्नीताः क्षयं लुब्धकैर्दम्भस्य स्फुरितं विदन्नपि जनोजाल्मोगुणानीहते ॥

अत्र वाताहारादित्रयं व्युत्क्रमेणवाच्यं ॥

अरे रामाहस्ताभरणभसलश्रेणिशरणस्मरक्रीडाव्रीडाशमनविरहिप्राणदमन । सरोहंसोत्तंसप्रचलदलनीलोत्पलसखे सखेदोहं मोहं श्लथय कथय क्वेन्दुवदना ॥

अत्र विरहिप्राणदमनेति नानुवाद्यं ॥ लग्नं रागावृताङ्ग्येत्याद्यत्र वदितुं तेस्त्वित्युपसंहृतोपिते नेत्यादिना पुनरुपात्तः ॥

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः । यथास्य जायते पातोन तथा पुनरुन्नतिः ॥

अत्र पुंव्यञ्जनस्यापि प्रतीतिः यत्रैकोदोषः प्रदर्शितस्तत्र दोषान्तराण्यपि सन्ति तथापि तेषां तत्राप्रकृतत्वात्प्रकाशनं न कृतं ॥ कर्णावतंसादिपदे कर्णादिध्वनिनिर्म्मितिः सन्निधानादिबोधार्थं॥ अवतंसादीनि कर्णाद्याभरणान्येवोच्यन्ते ॥ तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये यथा ॥

अस्याः कर्णावतंसेन जितं सर्व्वं विभूषणं। तथैव शोभतेत्यन्तमस्याः श्रवणकुण्डलं। अपूर्व्वमधुरामोदप्रमोदितदिशस्ततः। आययुर्भृङ्गमुखराः शिरःशेखरशालिनः॥

अत्र कर्णश्रवणशिरःशब्दाः सन्निधानप्रतीत्यर्थाः॥

विदीर्णाभिमुखारातिकराले सङ्गरान्तरे। धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव॥

अत्र धनुःशब्द आरूढत्वावगतये॥ अन्यत्र तु॥

ज्याबन्धनिस्पन्दभुजेन यस्य विनिश्वसद्वक्त्रपरम्परेण। कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमाप्रसादादिति॥

अत्र केवलो ज्याशब्दः॥

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः। मुक्ताहारेण लसता हसतीव स्तनद्वयं॥

अत्र मुक्तानामन्यरत्नामिश्रितत्वबोधनाय मुक्ताशब्दः॥

सौन्दर्य्यसम्पत्तारुण्यं यस्यास्ते तेच विभ्रमाः। षट्पदान्पुष्पमालेव कान्ताकर्षति सा सखे॥

अत्रोत्कृष्टपुष्पविषये पुष्पशब्दः। निरुपपदो हि मालाशब्दः पुष्पस्रजमेवाभिधत्ते। स्थितेष्वेतत्सम

र्घनं । न खलु कणवितंसादिवज्जघनकाञ्चीत्यादि क्रियते। जगाद मधुरांवाचं विशदाक्षरशालिनी मित्यादौ क्रियाविशेषणत्वेपि विवक्षितार्थप्रतीति सिद्धौ गतार्थस्याविशेष्यस्य विशेषणदानार्थं क्वचित्प्र योगः कार्य्यइति न युक्तं । युक्तत्वे वा ॥

चरणत्र परित्राणरहिताभ्यामपि द्रुतं । पादाभ्यां दूरम ध्वानं व्रजन्नेष न खिद्यते॥

इत्युदाहार्य्यं। ख्यातेऽर्थे निर्हेतोरदुष्टता ॥ यथा ॥

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्यां उमामुखन्तु प्रतिपद्य लोलादिसंश्रयां प्रीतिमवाप लक्ष्मीः ॥

अत्र रात्रौ पद्मस्य सङ्कोचोदिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति नभुङ्क्ते इति हेतु नापे क्षते॥ अनुकरणे तु सर्व्वेषां श्रुतिकटुप्रभृतीनां दोषाणां यथा॥

मृगचक्षुषमद्राक्षमित्यादिकथयत्ययं । पश्यैष च गवि त्याह सुत्रामाणं यजेतिच ॥

वक्त्राद्यौचित्यवशाद्दोषोपि गुणः क्वचित्क्वचि न्नोभौ वक्तृप्रतिपाद्य व्यङ्ग्यवाच्यप्रकरणादीनां महिम्ना दोषोपि क्वचिद्गुणः। क्वचिन्न दोषो न गुणः तत्र वैयाकरणादौ वक्तरि प्रतिपाद्येव।

रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः। क्रमेणोदाहरणं॥

दीधीवेवीङ्समः कश्चिद्गुणवृद्धोरभाजनं। क्विप्प्रत्ययनिभः कश्चिद्यत्र सन्निहिते न ते ॥ यदा त्वामहमद्राक्षं शब्दविद्याविशारदं। उपाध्यायं तदास्मार्षं समस्प्राक्षञ्च सम्मदं॥ अन्त्रप्रोतवृहत्कपालनलकक्रूरक्वणत्कङ्कणप्रायःप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम्। पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति॥ वाच्यवशाद्यथा॥ मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः सारङ्गा महिषा मदं व्रजत किं शून्येषु शूरा न के। कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः शनैः सिन्धुध्वानिनि हुङ्कृते स्फुरति यत्तद्गर्जितं गर्जितं॥

अत्र सिंहे वाच्ये परुषाः शब्दाः॥ प्रकरणवशाद्यथा॥

रक्ताशोककृशोदरी क्व नु गता त्यक्त्वानुरक्तं जनं नो दृष्टेति मुधैव चालयसि किं वाताभिभूतं शिरः। उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छदस्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोयं कुतः॥

अत्र शिरोधूननेन कुपितस्य वचसि कुचिन्नीरसेन गुणेन दोषः॥ यथा॥

शीर्णघ्राणाङ्घ्रिपाणीन् घृणिभिरपघनैर्घर्घराव्यक्तघोषान् दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन्यः। घर्मांशो स्तस्यवोन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्तेर्दत्तार्घाःसिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातं॥

अप्रयुक्तनिहतार्थौश्लेषादावदुष्टौ। यथा॥

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गाञ्च योधारयत्। यस्याहुः शशिमच्छिरोहरइति स्तुत्यञ्च नामामराः पायात्सस्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः॥

अत्रमाधवपक्षेशशिमदन्धकक्षयकरशब्दावप्रयुक्तनिहतार्थौ॥ अश्लीलं क्वचिद्गुणोयथा॥ सुरतारम्भगोष्ठ्यां॥

द्व्यर्थैः पदैः पिशुनयेच्चरहस्यवस्त्विति कामशास्त्रस्थितौ॥ करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते। उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते। शमकथासु। उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे। क्लेदिनि स्त्रीव्रणे सक्तिरक्रिमेः कस्य जायते॥ निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन। रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः॥

अत्र भाव्यमङ्गलसूचकं। सन्दिग्धमपि वाच्य

महिम्ना क्वचिन्नियतार्थप्रतीतिकृत् व्याजस्तुति पर्य्यवसायित्वे गुणः ॥ यथा ॥

पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनदेव । विलसत्करेणुगहनं संप्रतिसममावयोः सदनं ॥

प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे सत्यप्रतीतङ्गुणो यथा ॥

आत्मारामाविहितरतयोनिर्व्विकल्पे समाधौ ज्ञानोद्रेकाद्विघटितमनोग्रन्थयः सत्त्वनिष्ठाः। सम्वीचन्ते कमपि तमसां ज्योतिषां वापरस्तात्तं मोहान्धः कथमयममुं वेत्ति देवं पुराणं॥

स्वयंवा परामर्शेयथा॥

षडधिकदशनाडीचक्रमध्यस्थितात्मा हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः। अविचलितमनोभिःसाधकैर्म्मृग्यमाणः स जयति परिणद्धः शक्तिभिः शक्तिनाथः॥

अधमप्रकृत्युक्तिषुग्राम्योगुणः॥ यथा॥

फुल्लुक्करं कलमकूरणिहं वहन्तिजे मिन्दुवारविडवामहव सहादे। जे गालिदस्समहिसीदहिणोसरिच्छा ते किंचमुद्धविअदूलपसूणपुञ्जा।

अत्र कलमभक्तमहिषीदधिशब्दाग्राम्या अपि विदूषकोक्तौ॥ न्यूनपदंक्वचिद्गुणोयथा॥

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा। मामामानदमातिमामलमिति क्षामाक्षरोल्लापिनी सुप्ता किंनु मृता नु किं मनसि किं लीना विलीना नु किं॥

क्वचिन्न गुणो न दोषः। यथा॥

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः। तां हर्त्तुं विबुधद्विषोपि न च मे शक्ताः पुरोवर्त्तिनीं सा चात्यन्तमगोचरं नयनयोर्यातेति कोयं विधिः॥

अत्र पिहितेत्यतोनन्तरं नैतद्यतइत्येतैर्न्यूनैः पदैर्विशेषविधेरकरणान्न गुणः उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधतइति न दोषः॥ अधिकं पदं क्वचिद्गुणः॥ यथा॥

यद्वञ्चनाहितमतिर्बहुचाटुगर्भं कार्य्योन्मुखः खलजनः कृतकं ब्रवीति। तत्साधवो न विदन्ति विदन्ति किन्तु कर्त्तुं वृथा प्रणयमस्य न पारयन्ति॥

अत्र विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरं॥

यथावा॥

वद वदजितः स शत्रुर्नहतोजल्पंश्च तवतवास्मीति। चित्रं चित्रमरोदीद्धाहेति परं मृते पुत्रे॥

इत्येवमादौ हर्षभयादियुक्ते वक्तरि ॥ कथित पदं क्वचिद्गुणः ॥ लाटानुप्रासे अर्थान्तरसंक्रमित वाच्ये विहितस्यानुवाद्यत्वेच क्रमेणोदाहरणं ॥

सितकरकररुचिरविभाविभाकराकारधरणिधरकीर्त्तिः। पौरुषकमलाकमलापि तवैवास्ति नान्यस्य ॥ ताला जाअन्ति गुणा जाला दे सहिअएहिं घेप्पन्ति । रइ किरणाणुगहिआइं होन्ति कमलाइं कमलाइं ॥ जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते । गुणप्रकर्षेण जनोनुरज्यते जनानुरागप्रभवा हि संपदः ॥

पतत्प्रकर्षमपि क्वचिद्गुणः ॥ यथा ॥ उदाहृते प्रागप्राप्तेत्यादौ ॥ समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः ॥ यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहणमपि तु वाक्यान्तरमेव क्रियते ॥ यथात्रैव प्रागप्राप्तेत्यादौ ॥ अपदस्थसमासोक्वचिद्गुणः ॥ यथा उदाहृते रक्ताशोकेत्यादौ ॥ गर्भितं तथैव यथा ॥

होमि अवहत्थिअरेहो णिरङ्कुसो अहविवेअरहिओ वि । सिविणेवि तुमम्मि पुणो पत्तिहि भत्तिं ण पसुमरामि ॥

अत्र प्रतीहीतिमध्येदृढप्रत्ययोत्पादनाय एवमन्यदपि लक्ष्याल्लक्ष्यं ॥ व्यभिचारिरसस्थायिभावानां शब्दवाच्यता। कष्टकल्पनया व्यक्तिरनुभाव

विभावयोः । प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः ॥ अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः। अङ्गिनोननु सन्धानं प्रकृतीनां विपर्य्ययः॥ अनङ्गस्याभिधानञ्च रसे दोषाःस्युरीदृशाः । स्वशब्दोपादानं व्यभिचारिणोयथा॥

सव्रीडा दयितानने सकरुणा मातङ्गचर्म्माम्बरे सत्रासा भुजगे सविस्मयरसा चन्द्रे मृतस्यन्दिनि । सेर्ष्या जन्हुसुतावलोकनविधौ दीना कपालोदरे पार्व्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः ॥

अत्र व्रीडादीनां ॥ व्यानम्रादयितानने मुकुलितामातङ्गचर्माम्बरे सोत्कम्पाभुजगे निमेषरहिताचन्द्रे मृतस्यन्दिनि। मीलद्भ्रूःसुरसिन्धुदर्शनविधौ म्लानाकपालोदरे । इत्यादि तु युक्तं ॥ रसस्य स्वशब्देन शृङ्गारादिशब्देन वाच्यत्वं ॥ क्रमेणोदाहरणं ॥

तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकितां। नेत्रयोः कृतवतोऽस्य गोचरे कोप्यजायत रसोनिरन्तरः ॥ आलोक्यकोमल कपोलतलाभिषिक्तव्यक्तानुरागसुभगामभिरामरूपां पश्यैष वाल्यमतिवृत्यविवर्त्तमानः शृङ्गारसीमनि तरङ्गितमातनोति ॥

स्थायिनोयथा॥

संप्रहारे प्रहरणैः प्रहाराणां परस्परं। ठणत्कारैःश्रुति गतैरुत्साहस्तस्य कोप्यभूत् ॥

अत्रोत्साहस्य॥

कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यूनः । लीलाशिरोंशुकनिवेशविशेषकॢप्तिव्यक्तस्तनोन्नति रभून्नयनावनौ सा ॥

अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावापर्य्यवसायिनः स्थिता इति कष्टकल्पना॥

परिहरति रतिं मतिं लुनीते स्खलति भृशं परिवर्त्तते च भूयः। इति वत विषमादशास्य देहं परिभवति प्रसभं किमत्र कुर्म्मः ॥

अत्र रतिपरिहारादीनामनुभावादीनां करुणादावपि सम्भवात्कामिनीरूपोविभावोयत्नतः प्रतिपाद्यः॥

प्रसादे वर्त्तस्व प्रकटय मुदं सन्त्यज रुषं प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः । निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥

अत्रशृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपोविभावस्तत्प्रकाशितोनिर्वेदस्य व्यभिचारी उपात्तः॥

णिहुअरमणम्मिलोअणपहम्मि पडिए। गुरूणमज्झम्मि सअलपरिहारहिअआवणगमणंवेअमहहवह ॥

अत्र सकलपरिहारवनगमने शान्तानुभावौ। इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं चेन्न दोषः ॥ दीप्तिः पुनः पुनर्यथा॥ कुमारसम्भवे रति विलापे। अकाण्डेकेदेयथा॥ वीरचरिते द्वितीयेऽङ्के राघवभार्गवयोर्धाराधिरूढेवीररसे कङ्कणमोचनाय गच्छामीति राघवस्योक्तौ॥ अङ्गस्याप्रधानस्याति विस्तरेण वर्णनं ॥ यथा ॥ हयग्रीववधे हयग्रीवस्य। अङ्गिनोननुसन्धानं यथारत्नावल्यां चतुर्थेऽङ्के वाभ्रव्यागमने सागरिकाया विस्मृतिः प्रकृतयोदिव्या अदिव्या दिव्यादिव्याश्च ॥ वीररौद्र शृङ्गारशान्तरस प्रधाना धीरोदात्तधीरोद्धतधीर ललितधीरप्रशान्ता उत्तममध्यमाधमाश्च ॥ तत्र रतिहासशोकाद्भुतान्यदिव्योत्तमप्रकृतिवद्दिव्येष्वपि। किन्तु रतिः सम्भोगशृङ्गाररूपा उत्तमदेवताविषयान वर्णनीया॥ तद्वर्णनं हि पित्रोः संभोगवर्णनमिवात्यन्तमनुचितं ॥

क्रोधं प्रभो संहर संहरेति यावद्गिरः खेमरुतां चरन्ति।
तावत्सवह्निर्भवनेत्र जन्मा भस्मावशेषं मदनं चकार ॥

इत्युक्तवभ्रूकुट्यादिविकारवर्जितःसद्यः फलदः क्रोधः। स्वर्गपातालगगनसमुद्रोल्लङ्घनाद्युत्साहश्च दिव्येष्वेव ॥ अदिव्येषु तु यावदवदानं प्रसिद्धमुचितंवा तावदेवोपनिबद्धव्यं। अधिकन्तु निबध्यमानमसत्यप्रतिभासेन नायकवद्वर्त्तितव्यं न प्रतिनायकवदित्युपदेशेन पर्य्यवस्येत् दिव्यादिव्येषुत्वभयथापि॥ एवमुक्तस्यौचित्यस्य दिव्यादीनामिव धीरोदात्तादीनाममप्यन्यथावर्णनं विपर्य्ययः ॥ तत्र भवन्भगवन्नित्युत्तमेनाधमेन मुनिप्रभृतौ न राजादौ भट्टारकेति न राजादौ परमेश्वरेति न मुनिप्रभृतौ प्रकृतिविपर्य्ययोपत्तेर्वाच्यं ॥ एवं देशकालवयोजात्यादीनां वेषव्यवहारादिकमुचितमेवोपनिबद्धव्यं॥ अनङ्गस्य रसानुपकारकस्य वर्णनं यथा॥कर्पूरमञ्जर्य्यांनायिकया स्वात्मना च वसन्तवर्णनमनादृत्य वन्दिवर्णितस्य राज्ञः प्रशंसनं ईदृशा इति नायिकापादप्रहारादिना नायककोपादिवर्णनं॥ उक्तंहि ध्वनिकृता ॥ अनौचित्यादृतेनान्यद्रसभङ्गस्य कारणं। प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परेति ॥५८॥५९॥६०॥ इदानीं

क्वचिददोषा अप्येतदित्युच्यन्ते ॥ न दोषः स्वपदेनो क्तावपि सञ्चारिणः क्वचित् ॥ यथा ॥

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया तैस्तैर्ब्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः । दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरीनवे संगमे संरोहत्पुलकाहरेण हसताश्लिष्टा शिवायास्तु वः ॥

अत्रौत्सुक्यशब्द इव तदनु विभावेन तथा प्रतीतिकृत् ॥ अतएव दूरादुत्सुकमित्यादौ व्रीडा प्रेमाद्यनुभावानां विवलितत्वादीनामिवोत्सुकत्वा नुभावस्य सहसा प्रसारणादिरूपस्य तथा प्रति पत्तिकारित्वाभावादुत्सुकमिति कृतं ॥ सञ्चार्यादे र्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥ बाध्यस्योक्तिर्न परं नदोषोयावत्प्रकृतरसपरिपोषकृत् ॥ यथा ॥ क्वाकार्य्यं शशलक्ष्मणः क्व चकुलमित्यादावत्र वित र्कादीषूद्गतेष्वपि चिन्तायामेव विश्रान्तिरिति प्रकृ तरसपरिपोषः ॥

पाण्डुक्षामं वदनंहृदयं सरसं तवालसञ्च वपुः । आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥

इत्यादौ साधारणत्वं पाण्डुतादीनामिति न विरुद्धं ॥

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः। किन्तु मत्तां गतापाङ्गभङ्गलोलं हि जीवितं॥

इत्यत्राद्यमर्द्धं वाध्यत्वेनैवोक्तं ॥ जीवितादप्यधिकमपाङ्गभङ्गस्यास्थिरत्वमिति प्रसिद्धभङ्गुरोपमानतयोपात्तं शान्तमेव पुष्णाति। न पुनः शृङ्गारस्यात्र प्रतीतिस्तदङ्गाप्रतिपत्तेः न तु विनेयोन्मुखीकरणमत्र परिहारः। शान्तशृङ्गारयोर्नैरन्तर्य्यस्याभावात्॥ नापि काव्यशोभाकरणं॥ रसान्तरादनुप्रासमात्राद्वा तथाभावात्॥ आश्रयैक्ये विरुद्धो यः स कार्य्यो भिन्नसंश्रयः॥ रसान्तरेणान्तरितो नैरन्तर्य्येण यो रसः॥ वीरभयानकयोरेकाश्रयत्वेन विरोध इति प्रतिपक्षगतत्वेन भयानको निवेशयितव्यः। शान्तशृङ्गारयोस्तु नैरन्तर्य्येण विरोध इति रसान्तरमन्तरे कार्य्यं॥ यथा नागानन्दे शान्तस्य जीमूतवाहनस्य। अहो गीतमहो वाद्यमित्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो वर्णितः॥ न परं प्रबन्धे यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्त्तते॥ यथा॥

भूरेणुदिग्धा नवपारिजातमालारजोवासितवाङ्मध्याः।
गाढं शिवाभिः परिरभ्यमाणा सुराङ्गनाश्लिष्टभुजान्तरालाः॥

सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानाः। संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः॥ विमानपर्य्यङ्कतलेनिषण्णाः कुतूहलाविष्टतया तदानीं। निर्द्दिश्यमानान् ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन्॥

अत्र वीभत्सशृङ्गारयोरन्तर्वीररसोनिवेशितः॥

स्मर्य्यमाणो विरुद्धोपि साम्येनाथ विवक्षितः। अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परं॥

अयं सरसनोत्कर्षी पीनस्तनविमर्द्दनः। नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥

एतद्भूरिश्रवसः समरभुवि पतितं हस्तमालोक्य तद्वधूरभिदधौ। अत्र पूर्व्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं परिपोषयति॥

दन्तैःक्षतानि करजैश्चविपाटितानि प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे। दत्तानि रक्तमनसा मृगराजवध्वा जातस्पृहैर्मुनि भिरप्यवलोकितानि॥

अत्र कामुकस्य दन्तक्षतादीनि यथाचमत्कारकारीणि तथाजिनस्य ॥यथावा॥ परःशृङ्गारीतदवलोकनात्सस्पृहस्तद्ददेतहृशोमुनयइति साम्यविवक्षा॥

क्रामन्त्यःचतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीःपादैः पातितयावकैरिव पतद्वाष्पाम्बुधौताननाः। भीता भर्तृकरावलम्बितकरास्त्वच्छत्रुनार्योधुना दावाग्निं परितोभ्रमन्ति पुनरप्युद्यद्विवाहा इव॥

अत्र चाटुकेराजविषया रतिः प्रतीयते तत्रकरुणइव शृङ्गारोप्यङ्गमिति तयोर्नविरोधः॥ यथा॥

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर। एवमाशाग्रहग्रस्ताः क्रीडन्ति धनिभिर्बुधाः॥ अत्रेहीतिक्रीडन्ति गच्छेतिक्रीडन्तीति क्रीडनापेक्षयोरागमनगमनयोर्न विरोधः॥

चिप्तोहस्तावलग्नः प्रसभमभिहतोप्याददानोंशुकान्तं गृह्णन्केशेष्वपास्तश्चरणनिपतितोनेऽक्षितः संभ्रमेण। आलिङ्गन्योवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः कामीवार्द्रापराधः सदहतुदुरितं शाम्भवोवः शराग्निः॥

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गं॥ तस्यतु शृङ्गारस्तथापि न करुणे विश्रान्तिरितितस्याङ्गतैव ॥ अथवा प्राग्यथा कामुक आचरतिस्म। तथा शराग्निरिति शृङ्गारपोषितेन करुणेन मुख्यएवार्थ उपोद्वल्यते॥ उक्तंहि॥ गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते। प्रधानस्योपकारेहि तथा भूयसि वर्त्तत इति प्राक् प्रतिपादितरूपस्य

रसस्य रसान्तरेण न विरोधः ॥ नाप्यङ्गाङ्गिभावो भवतीति रसशब्देनात्र तत्स्थायिभाव उपलक्ष्यते ॥ ६१ ॥

इति काव्यप्रकाशे दोषदर्शनोनाम सप्तमउल्लासः॥

एवं दोषानुक्त्वा गुणालङ्कारविवेकमाह ॥ ये रसस्याङ्गिनोधर्माः शौर्य्यादयइवात्मनः। उत्कर्षहेतवस्तेस्युरचलस्थितयोगुणाः ॥ आत्मन एवहि यथा शौर्य्यादयोनाकारस्य तथा रसस्यै व माधुर्य्यादयोगुणा न वर्णानां ॥ क्वचित्तु शौर्य्यादिसमुचितस्याकारमहत्त्वादेर्दर्शनादाकारएवास्य शूरइत्यादेर्व्यवहारादन्यत्राशूरेपि विततात्कतित्वमात्रेण शूरइति क्वापि शूरेपि मूर्त्तिलाघवमात्रेणाशूर इत्यविश्रान्तप्रतीतयोयथाव्यवहरन्ति । तद्वन्मधुरादिव्यञ्जकसुकुमारवर्णानां माधुर्य्यव्यवहारप्रवृत्तेरमधुरादिरसाङ्गानां वर्णानां सौकुमार्य्यादिमात्रेण माधुर्य्यादि । मधुरादिरसोपकरणानां तेषाम सौकुमार्य्यादेरमाधुर्य्यादिरसपर्य्यन्तविश्रान्तप्रतीतिबन्ध्याव्यवहरन्ति॥ अतएव माधुर्य्यादयोरसधर्माः समुचितैर्व्वर्णैर्व्यज्यन्ते। नतु वर्णमात्राश्रयाः।यथैषां व्यञ्जकत्वं तथोदाहरिष्यते॥ उपकुर्व्वन्ति तं सन्तं

येङ्गद्वारेण जातुचित् । हारादिवदलङ्कारास्तेनु प्रासोपमादयः ॥ ये वाचकवाच्यलक्षणाङ्गातिशयमुखेन मुख्यं रसं सम्भविनमुपकुर्वन्ति । ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोप्युपकारका हारादय इवालंकाराः ॥ यत्रतुनास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्य्यवसायिनः ॥ क्वचित्तु सन्तमपि नोपकुर्व्वन्ति ॥ यथा क्रममुदाहरणानि ॥

अपसारय घनसारं कुरु हारं दूरएवकिंकमलैः । अलमलमालिमृणालैरिति वदति दिवानिशं बाला ॥

इत्यादौ वाचकमुखेन ॥

मनोरागस्तीव्रं विषमिव विसर्प्पत्यविरतं प्रमाथीनिर्धूमं ज्वलति विधुतः पावकइव । हिनस्तिप्रत्यङ्गं ज्वरइववलीयानितइतोन मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥

इत्यादौ वाच्यमुखेनालङ्कारौ रसमुपकुरुतः ॥

चित्ते विहट्टदि णखुट्टदिसागुणे सुंसेज्जाइलुठदि विसट्टदि दिम्मुहेसुम् । वोलम्मिवट्टदिपवट्टदिकव्ववन्धेझाणेणतुट्टदि चिरं तरुणीतरट्टी ॥

इत्यादौ वाचकमेव ॥

मित्रे क्वापि गतेसरोरुहवने वद्धानने ताम्यति क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नां पुरः सारसीं । चक्राङ्केन वियोगिना

विलसता नास्वादिता नोज्झिता कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥

इत्यादौ वाच्यमेव नतु रसं ॥ अत्र विसलता न जीवं रोद्धुंक्षमेति प्रकृताननुगुणोपमा ॥ एष एवच गुणालङ्कारप्रविभागः ॥ एवंसमवायवृत्त्या शौर्यादयः संयोगवृत्त्या तु हारादयइत्यस्तु गुणालङ्काराणां भेदः । ओजःप्रभृतीनामनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डलिकाप्रवाहेणैषां भेदइत्यभिधानमसत् ॥ यदप्युक्तं काव्यशोभायाः कर्त्तारोधर्म्मा गुणास्तदतिशयहेतवस्त्वलङ्कारा इति ॥ तदपि न युक्तं ॥ यतः किं समस्तैर्गुणैःकाव्यव्यवहार उत कतिपयैर्यदिसमस्तैस्तत्कथमसमस्तगुणागौडी पाञ्चालीच रीतिः काव्यस्यात्मा ॥ अथ कतिपयैस्तत्कथं ततः ॥ अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यःप्रोद्यन्नुल्लसत्येष धूम इत्यादावोजःप्रभृतिषु गुणेषु सत्स्वपि न काव्यव्यवहारः।स्वर्गप्राप्तिरनेनैवदेहेन वरवर्णिनि। अस्यारदच्छदरसोन्यक्करोतितरां सुधामित्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारप्रवर्त्तकौ ॥ इदानीं गुणानां भेदमाह ॥

माधुर्य्यौजःप्रसादाख्यास्त्रयस्तेन पुनर्दश ॥ एषां क्रमेण लक्षणमाह ॥ आह्लादकत्वं माधुर्य्यं शृङ्गारे द्रुतिकारणं । शृङ्गारेऽअर्थात्संभोगे द्रुतिर्गलितत्व मिव ॥ अव्यत्वं पुनरोजःप्रसादयोरपि ॥ करुणे विप्रलम्भे तच्छान्तेचातिशयान्वितं । अत्यन्तद्रुति हेतुत्वात् ॥ दीप्त्यात्मविस्तृतेर्हेतुरोजोवीररसस्थितिः । चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः । वीभत्स रौद्ररसयोस्तस्याधिक्यं क्रमेणच ॥ वीराद्बीभत्से ततो रौद्रे सातिशयमोजः । शुष्केन्धनाग्निवत्स्वच्छजल वत्सहसैव यः । व्याप्नोत्यन्यत्प्रसादोसौ सर्व्वत्रविहि तस्थितिः ॥ अन्यदिति व्याप्यमिहचित्तं सर्व्वत्रेति सर्व्वेषु रसेषु सर्वासु रचनासु च । गुणवृत्त्या पुनस्तेषां वृत्तिःशब्दार्थयोर्म्मता ॥ गुणवृत्त्या उपचा रेण तेषां गुणानां ॥ आकारे शौर्य्यस्येव ॥ ६८ ॥ ॥ ६८ ॥ कुतस्त्रयएव न दशेत्याह केचिदन्तर्भव न्त्येषु दोषत्यागात्परे श्रिताः ॥ अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततोदश ॥ वहूनामपि पदानामेकपद वद्भासनात्मा यः श्लेषोयस्यारोहावरोहक्रमरूपः समाधिर्याच विकटत्वलक्षणा उदारता यश्चौजो

मिश्रितशैथिल्यात्माप्रसादस्तेषामोजस्यन्तर्भावः। पृथक्पदत्वरूपं माधुर्य्यंभङ्ग्या साक्षादुपात्तं॥ प्रसादेनार्थव्यक्तिर्गृहीता मार्गाभेदरूपा समता क्वचिद्दोषः॥ तथाहि॥

मातङ्गाः किमुवल्गितैरित्यादौ॥

सिंहाभिधाने मसृणमार्गत्यागोगुणः॥ कष्टत्वग्राम्यत्वयोर्दुष्टताभिधानात्तन्निराकरणेनापारुष्यरूपं सौकुमार्य्यमौज्वल्यरूपा कान्तिश्च स्वीकृता॥ एवं नदशशब्दगुणाः॥ पदार्थे वाक्यरचनं वाक्यार्थेच पदाभिधा। प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य चेति या प्रौढिरोजइत्युक्तं तद्वैचित्र्यमात्रं न गुणस्तदभावेपि काव्यव्यवहारप्रवृत्तेः। अपुष्टार्थत्वाधिकपदत्वानवीकृतत्वामङ्गलरूपाऽश्लीलग्राम्याणां निराकरणेनच साभिप्रायत्वरूपमोजोऽर्थवैमल्याप्रसादउक्तिवैचित्र्यरूपंमाधुर्य्यमपारुष्यरूपं सौकुमार्य्यमग्राम्यत्वरूपा उदारताच स्वीकृतानि॥ अभिधास्यमानस्वभावोक्त्यलङ्कारेणरसध्वनिगूणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपार्थव्यक्तिः दीप्तरसत्वरूपा कान्तिश्च स्वीकृता॥ क्रमकौटिल्यानुल्वणत्वोपपत्तियोगरूपघटनात्माश्लेषोपि विचि

त्वमात्रं॥ अवैषम्यस्वरूपा समता दोषाभावमात्रं न पुनर्गुणः ॥ कः खल्वनुन्मत्तोऽन्यस्य प्रस्तावेऽन्यद भिदध्यात् ॥ अर्थस्यायोनेरन्यच्छायायोनेर्व्वायदि न भवति दर्शनं तत्कथं काव्यमित्यर्थदृष्टिरूपः समाधिरपि न गुणः। तेन नार्थगुणाः वाच्याः वाच्या वक्तव्याः प्रोक्ताःशब्दगुणाश्च ये॥ वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥ के कस्येत्याह॥ मूर्द्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गारणौ लघू। अवृत्तिर्मध्यवृत्तिर्वामाधुर्य्ये घटना तथा॥ टठडढव र्ज्जिताः कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ता स्तथा रेफणकारौ ह्रस्वांतरिताविति वर्णाः॥ समासाभावोमध्यमः समासोवेति समासस्तथा माधुर्य्य वतीपदान्तरयोगे रचना माधुर्य्यस्यव्यञ्जिका॥ उदाहरणं॥

अनङ्गरङ्गप्रतिमन्तदङ्गभङ्गीभिरङ्गीकृतमानताङ्ग्याः।
कुर्व्वन्ति यूनां सहसा यथैताःस्वान्तानिशान्तापरचिन्तनानि॥

योगआद्यतृतीयाभ्यामन्त्ययोरेणतुल्ययोः।टादिः शषौवृत्तिदैर्घ्यं गुम्फ उद्धतओजसि ॥ वर्गप्रथम तृतीयाभ्यामन्त्ययोस्तद्द्वितीयचतुर्थयोः रेफेणाधउ पर्य्यभयत्र वा यस्य कस्यचित्तुल्ययोस्तेन तस्यैव

सम्बन्धः ॥ टवर्गोऽर्थात् णकारवर्जः । शकारषकारौ दीर्घसमासोविकटासंघटना ओजसः । उदाहरणं ॥

मूर्ध्नामुदृत्तकृत्तेत्यादि ॥ ७२ ॥

श्रुतिमात्रेण शब्दानां येनार्थप्रत्ययोभवेत् । साधारणः समग्राणां सप्रसादोगुणः स्मृतः ॥ समग्राणां रसानां संघटनानाञ्च । उदाहरणं ॥

परिम्लानं पीनस्तनजघनसङ्गादुभयतस्तनोर्मध्यस्यान्तःपरिमिलनमप्राप्य हरितं । इदं व्यस्तन्यासं श्लथभुजलताक्षेपचलनैः कृशाङ्ग्याः सन्तापं वदति बिसिनी पत्र शयनं ॥

यद्यपि गुणपरतन्त्राः संघटनादयस्तथापि वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित्क्वचित् । रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥ क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः ॥ यथा ॥

मन्थायस्तार्णवाम्भः प्लुतिकुहरचलन्मन्दरध्वानधीरः कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः । कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः केनास्मत्सिंहनादप्रतिरसितसखोदुन्दुभिस्ताडितोसौ ॥

अत्र हि न वाच्यं क्रोधादिव्यञ्जकमभिनेयार्थञ्च काव्यमिति तत्प्रतिकूला उद्धतारचनादयः

वक्ता चात्र भीमसेनः॥ क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादयः॥ यथा॥

प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघातत्रासाकृष्टाश्वतिर्य्यग्वलितरविरथेनारुणेनेक्ष्यमाणं। कुर्व्वत्काकुत्स्थवीर्य्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां भाङ्कारैर्भीममेतन्निपततिवियतः कुम्भकर्णोत्तमाङ्गं॥

क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव ते॥ तथा ह्याख्यायिकायां शृङ्गारेपि न मसृणवर्णादयः कथायां रौद्रेपि नात्यन्तमुद्धताः॥ नाटकादौ रौद्रेऽपि नदीर्घसमासादयः॥ एवमन्यदप्यौचित्यमनुसर्त्तव्यं॥ इति श्री काव्यप्रकाशे गुणालङ्कारभेदनियतगुणनिर्णयोनामाष्टम उल्लासः॥

गुणविवेचने कृतेऽलङ्काराः प्राप्तावसराइति। संप्रति शब्दालङ्कारानाह॥ यदुक्तमन्यथावाक्यमन्यथान्येन योज्यते। श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा॥ तथेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च॥ पदभङ्गश्लेषेण। यथा॥

नारीणामनुकूलमाचरसिचेज्जानामि कश्चेतनोवामानां प्रियमादधासि हि सत्क्षन्नैवाबलानां भवान्। युक्तं किं हित

कर्त्तनं ननु बलाभावप्रसिद्धात्मनः सामर्थ्यं भवतः पुरन्दरम तच्छेदं विधातुं कुतः ॥

अभङ्गश्लेषेण यथा ॥

अहो केनेदृशी बुद्धिर्दारुणा तवनिर्म्मिता त्रिगुणाश्रूयते बुद्धिर्नतु दारुमयी क्वचित् ॥

काक्वा यथा ॥

गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतोगन्तुं। अलिकुल कोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ ॥

वर्णसाम्यमनुप्रासः ॥ स्वरवैसादृश्येपि व्यञ्जन सदृशत्वं वर्णसाम्यं ॥ रसाद्यनु गतःप्रकृष्टोन्यासोऽनुप्रासः ॥ छेकवृत्तिगतोद्विधा ॥ छेकाः विदग्धाः ॥ वृत्तिर्नियतवर्णगतोरसविषयोव्यापारः ॥ गतइति छेकानुप्रासोवृत्त्यनुप्रासश्च ॥ किन्तयोःस्वरूपमित्याह ॥ सोऽनेकस्य सकृत्पूर्व्वः ॥ अनेकस्य अर्थात् व्यञ्जनस्य सकृदेकवारं सादृश्यं छेकानुप्रासः ॥ उदाहरणं ॥

ततोरुणपरिस्पन्दमन्दीकृतवपुः शशी। दध्रे कामपरिक्षाम कामिनीगण्ड पाण्डुतां ॥

एकस्याप्यसकृत्परः। एकस्याऽपि शब्दादनेकस्य व्यञ्जनस्य द्विर्बहुकृत्वोवा सादृश्यं वृत्त्यनुप्रासः ॥

माधुर्य्यव्यञ्जकैर्वर्णैरुपनागरिकेष्यते। ओजः प्रकाशकैस्तैस्तु परुषाउभयत्नापि प्रागुदाहृतम्॥ कोमलापरैः॥ परैः शेषैः॥ तामेव केचित्ग्राम्येति वदन्ति॥ उदाहरणं॥

अपसारय घनसारं कुरु हारं दूरएव किं कमलैः। अलमलमालि मृणालैरिति वदति दिवानिशं बाला॥

केषाञ्चिदेता वैदर्भीप्रमुखारीतयोमताः॥ एतास्तिस्रोवृत्तयोवामनादीनां मते वैदर्भीगौडीपाञ्चाल्याख्या रीतयो मताः॥ शाब्दस्तु लाटानुप्रासोभेदे तात्पर्य्यमात्रतः॥ शब्दगतोनुप्रासः। शब्दार्थयोरभेदेप्यन्वयमात्रभेदाल्लाटजनवल्लभत्वाच्चलाटानुप्रासः॥ एष पदानुप्रासइत्यन्ये॥ पदानां सः॥ स इति लाटानुप्रासः॥ उदाहरणं॥

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य। यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य॥

पदस्यापि॥ अपिशब्देन सइति समुच्चीयते॥ उदाहरणं॥

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः। सुधाकरः क्व नु पुनः कलङ्कविकलोभवेत्॥

वृत्तावन्यत्रतत्र वा॥ नाम्नः स वृत्त्यवृत्त्योश्च॥

एकस्मिन्समासे भिन्ने वासमासे समासासमास योर्वा। नाम्नः प्रातिपदिकस्य नतु पदस्य सारूप्यं॥ उदाहरणं॥

सितकरकररुचिरविभा विभाकराकारधरणिधरकीर्त्तिः। पौरुषकमलाकमला सापि तथैवास्ति नान्यस्य॥ तदेवंपञ्च धामतः॥

अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः। यमकम्॥ समरसमरसोयमित्यादावेकेषामर्थवत्त्वे अन्येषामनर्थवत्त्वे भिन्नार्थानामिति न युज्यते वक्तु मित्यर्थे सतीत्युक्तं॥ सेतिसरोरस इत्यादिवैलक्ष ण्येन तेनैव क्रमेण स्थिता॥ पादतद्भागवृत्तितद्या त्यनेकतां॥ प्रथमाद्वितीयादौ द्वितीयस्तृतीयादौ तृतीयश्चतुर्थे प्रथमस्त्रिष्वपीति सप्त॥ प्रथमोद्विती येतृतीयश्चतुर्थेइति॥ प्रथमश्चतुर्थे द्वितीयस्तृतीय इति द्वे॥ तदेवं पादजं नवभेदं॥ अर्द्धावृत्तिः श्लोकावृत्तिश्चेति द्वे॥ द्विधाविभक्ते पादे प्रथम पादादिभागः पूर्व्ववत्। द्वितीयतृतीयादिपादा दिभागेष्वंतभागोन्तभागेष्विति विंशति भेदाः॥ श्लोकान्तरे हि नासौभागावृत्तिः। त्रिखण्डे त्रिंशच्चतुः खण्डेचत्वारिंशत्॥ प्रथमपादादिगतान्त्यार्द्धादि

भागेद्वितीयपादादिगते आद्यार्द्धादिभागे यम्यत इत्याद्यन्वर्थतानुसरणेनानेकभेदमन्तादिकमाद्यन्तिकं तत्समुच्चयः मध्यादिकमादिमध्यमन्तमध्यंमध्यान्तिकं तेषां समुच्चयः तथा तस्मिन्नेव पादेआद्यादिभागानां मध्यादिभागेष्वनियतेवस्थाने आवृत्तिरिति प्रभूततमभेदं ॥ तदेतत्काव्यान्तर्गडुभूतमिति नास्य भेदलक्षणं कृतं ॥ दिङ्मात्रमुदाह्रियते ॥

सन्नारीभरणोमायमाराध्य विधुशेखरं । सन्नारीभरणोमायस्ततस्त्वं पृथिवीं जय ॥ विनायमेनोनयता सुखादिना विनायमेनोऽनयता सुखादिना । महाजनोदीयतमानसादरं महाजनोदीयतमानसादरं ॥ सलाऽरम्भरतोवश्यमवलम्बिततारवं । सर्व्वदारणमानैषीदावानलसमस्थितः । सपुनरास्तं स्लोकः ॥ अनन्तमहिमव्याप्तविश्वावेधानवेदयां । या च मातेव भजते प्रणते मानवे दयां ॥ यदानतोयदानतोनयात्ययं नयात्ययं । शिवेहितां शिवेहितां स्मरामि तां स्मरामि तां ॥ समुच्चयमकं । सरस्वतिप्रसादं मे स्थितिचित्तसरस्वति । सरस्वति कुरुक्षेत्र कुरुक्षेत्रसरस्वति ॥ ससार साकन्दर्पेण कन्दर्पेण ससार सा । शरन्नवाना बिभ्राणा नाविभ्राणा शरन्नवा ॥ मधु

षराजि पराजितमानिनी जनमनःसुमनःसुरभिश्रियं। अधृत वारित वारिजविप्लवं स्फुटितताम्रतताम्रवणं जगत्॥

एवं वैचित्र्यसहस्रैःस्थितमन्यदुन्नेयं॥ वाच्यभेदेन भिन्ना यद्युगपद्भाषणस्पृशः॥ श्लिष्यन्ति शब्दाः श्लेषोसावक्षरादिभिरष्टधा॥ अर्थभेदेन शब्दभेद इति दर्शने काव्यमार्गे स्वरोन गण्यतइति च नये वाच्यभेदेन भिन्ना अपि शब्दा यद्युगपदुच्चारणेन श्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते स श्लेषः॥ सच वर्णपादलिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचनानां भेदादष्टधा॥ क्रमेणोदाहरणं॥

अलङ्कारः शङ्काकरनरकपालंपरिजनोविशीर्णाङ्गोभृङ्गी वसुचवृषएकोवक्रवयाः। अवस्थेयं स्थाणोरपि भवति सर्वा मरगुरोर्व्विधौ वक्रे मूर्द्धि स्थितवति वयं के पुनरमी॥ पृथुकार्त्त स्वरपात्रं भूषितनिःशेषपरिजनं देव। विलसत्करेणुगहनं संप्रति सममावयोः सदनं॥ भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये। लावण्यैकमहानिधी रसिकतां लक्ष्मीदृशोस्तन्वती युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरेः॥

एष वचनश्लेषोपि॥

महदे सुरसन्धमोत मवसमासङ्गमागमा हरणे। हरवङ्गस

रणं चित्तमोहमवसरउमे सहसा ॥ अयं सर्व्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति । सामर्थ्यकृदमित्राणां मित्राणाञ्च नृपात्मजः ॥ रजनिरमणमौलेः पादपद्मावलोकक्षणसमयपराप्तापूर्व्वसम्पत्सहस्रं । प्रथमनिवहमध्ये जातु चित्तप्रसादादहमुचितरुचिः स्यां नन्दितामातथामे ॥ सर्व्वस्वं हर सर्व्वस्य त्वं भवच्छेदतत्परः । नयोपकारसांमुख्यमायासि तनुवर्त्तनं ॥

भेदाभावात्प्रकृत्यादेर्भेदोपि नवमो भवेत् ॥ नवमोपीत्यपिर्भिन्नक्रमः ॥ उदाहरणं ॥

योसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः । शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते ॥

अत्र प्रकरणादिनियमाभावाद्द्वावप्यर्थौ वाच्यौ ॥ ननु स्वरितादिगुणभेदात् भिन्नप्रयत्नोच्चार्य्याणां तदभावादभिन्नप्रयत्नोच्चार्य्याणाञ्च शब्दानां बन्धेऽलङ्कारान्तरप्रतिभोत्पत्तिहेतुः शब्दश्लेषोऽर्थश्लेषश्चेति द्विविधोप्यर्थालंकारमध्ये गणितोन्यैरिति कथमयं शब्दालङ्कारः ॥ उच्यते ॥ इह दोषगुणालङ्काराणां शब्दार्थगतत्वेन योविभागः सान्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते ॥ तथाहि ॥ कष्टत्वादिगाढत्वाद्यनुप्रासादयोव्यर्थत्वादि प्रौढ्याद्युपमादयस्तद्भावतदभावानुविधायित्वादेव शब्दार्थगतत्वेन

व्यवस्थाप्यन्ते ॥ स्वयञ्च पल्लवाताम्रभास्वत्करविराजिते त्वभङ्गःशब्दश्लेषः। प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदेति सभङ्गः शब्दश्लेषस्येति द्वावपि शब्दैकसमाश्रयाविति द्वयोरपि शब्दश्लेषत्वमुपपन्नं नत्वाद्यस्यार्थश्लेषत्वं। अर्थश्लेषस्य तु स विषयः । यत्र शब्दपरिवर्त्तनेपि न श्लेषत्वखण्डना ॥

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिं। अहो सुसदृशीवृत्तिस्तुलाकोटेः खलस्य च ॥

नचायमुपमाप्रतिभोत्पत्तिहेतुः श्लेषोपितु श्लेषप्रतिभोत्पत्ति हेतु रुपमा ॥ तथाहि । यथा ॥ कमलमिव मुखं मनोज्ञमेतत्कचतितरामित्यादौ गुणसाम्ये क्रियासाम्ये उभयसाम्येवा उपमा ॥ तथा ॥ सकलकलं पुरमेतज्जातं संप्रति सितांशुविम्बमिवेत्यादिशब्दमात्र साम्येपि सा युक्तैव ॥ तथाह्युक्तं रुद्रटेन॥ स्फुटमर्थालंकारावेतावुपमासमुच्चयौ किं तु आश्रित्यशब्दमात्रं सामान्यमिहापि सम्भवत इति ॥ नच कमलमिव मुखमित्यादिः साधारणधर्म्मप्रयोगशून्यउपमाविषय इति वक्तुं युक्तं॥पूर्णोपमायानिर्विषयत्वापत्तेः॥

देव त्वमेव पातालमाशानां त्वं निबन्धनं। त्वं चामरम रुद्भूमिरेको लोकत्रयात्मकः॥

इत्यादिः श्लेषस्य चोपमाद्यलङ्कारविविक्तोऽस्ति विषय इति द्वयोर्योगे सङ्कर एव॥ उपपत्तिपर्य्या लोचने तु उपमाया एवायं युक्तो विषयः अन्यथा विषयापहार एव पूर्णोपमायाः स्यात्॥ न च अविन्दु सुन्दरी नित्यं गलल्लावण्यविन्दुकेत्यादौ विरोध प्रतिभोत्पत्तिहेतुः श्लेषोपि तु श्लेषप्रतिभोत्पत्तिहेतु र्विरोधः॥ नह्यत्रार्थद्वयप्रतिपादकः शब्दश्लेषोद्विती यार्थस्य प्रतिभातमात्रस्य प्ररोहाभावात्॥ न च विरोधाभास इव विरोधः। श्लेषाभासः श्लेषस्त देवमादिषु वाक्येषु श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारा न्तरमेव॥ तथा च॥

सद्वंशमुक्तामणिः नान्यः कविरिव स्वल्पश्लोको देवमहान् भवान्॥ अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः। अहो दैव गतिश्चित्रा तथापि न समागमः॥ आदाय चापमचलं कृत्वा हीनं गुणं विषमदृष्टिः। यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नम स्तस्मै॥

इत्यादावेकदेशविवर्त्तिरूपकश्लेषव्यतिरेक समासोक्तिविरोधत्वमुचितं॥ नतु श्लेषत्वं शब्दश्लेष

इतिचोच्यते ॥ अर्थालङ्कारमध्ये च लक्ष्यतइति कोयं नयः ॥ किञ्च वैचित्र्यमलङ्कार इति यएव कविप्रतिभा संरम्भगोचरस्तत्रैव विचित्रतेति सैवा लङ्कारभूमिः ॥ अर्थमुखप्रेक्षितत्वमेतेषां शब्दाना मिति चेदनुप्रासादीनामपि तथैवेति तेप्यर्था लङ्काराः किं नोच्यन्ते ॥ रसादिव्यञ्जकस्वरूपवाच्य विशेषसव्यपेक्षत्वेपि ह्यनुप्रासादीनामलङ्कारता ॥ शब्दगुणदोषाणामप्यर्थापेक्षयैव गुणदोषता। अर्थ गुणदोषालंकाराणां शब्दापेक्षयैव व्यवस्थितिरिति तेपि शब्दगतत्वेनोच्यन्ताम् ॥ विधौ वक्रे मूर्द्धीत्या दौच वर्णादिश्लेषे एकप्रयत्नोच्चार्य्यत्वेऽर्थश्लेषत्वं शब्दभेदेपि प्रसज्यतामित्येवमादिस्वयं विचार्य्यं ॥ तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ॥ सन्नि वेशविशेषेण यत्र न्यस्तावर्णाः खड्गमुरजपद्माद्या कारमुल्लासयन्ति तच्चित्रं काव्यं ॥ कष्टंकाव्यमेत दिति दिङ्मात्रं प्रदर्श्यते ॥ उदाहरणं ॥

मारारिशक्ररामेभमुखैरासाररंहसा । साराब्धस्तवा नित्यं तदर्त्तिहरणक्षमा ॥ माता नतानां सङ्घट्टः श्रियां वाधि तसंभ्रमा । मान्याथ सीमा रामाणां शं मे दिश्यादुमादिमा ॥ खड्गबन्धः ॥ सरलावकुलारम्भतरलालिवलारवा । वारला

वङ्कलामन्दकरलावङ्कलामला ॥ मुरजबन्धः ॥ भासते प्रतिभासाररसाभाताहताविभा । भावितात्मा शुभावादे देवाभावत ते सभा ॥ पद्मः ॥ रसासाररसासारसायताचच तायसा । साता बाततवातासा रचतस्खस्खतचर ॥ सर्व्वतो भद्रं ॥

सम्भविनोऽप्यन्ये प्रभेदाः शक्तिमात्रप्रकाशका नतु काव्यरूपतां दधतीति नप्रदर्श्यन्ते ॥ पुनरुक्त वदाभासोविभिन्नाकारशब्दगा । एकार्थतेव भिन्न रूपसार्थकानर्थकशब्दनिष्ठमेकार्थत्वेनमुखे भासनं पुनरुक्तवदाभासः ॥ सच । शब्दस्य सभङ्गाभङ्ग रूपकेवलशब्दनिष्ठः ॥ उदाहरणं ॥

अरिबधदेहशरीरः सहसारथिसूततुरगपादातः । भाति सदान त्यागः स्थिरतायामवनितलतिलकः ॥ चकासत्यङ्गना रामाः कौतुकानन्दहेतवः । तस्य राज्ञस्सुमनसोविबुधाः पार्श्ववर्त्तिनः ॥

तथा शब्दार्थयोरयं । उदाहरणं ॥

तनुवपुरजघन्योसौ करिकुञ्जर रुधिररक्तखरनखरः । तेजोधाममहःपृथुमनसामिन्द्रोहरिर्जिष्णुः ॥

अत्रैकस्मिन्पदे परिवर्त्तिते नालङ्कारइति शब्दा श्रयोयोगःपरस्मिंस्तु परिवर्त्तितेपि स न हीयत

इत्यर्थनिष्ठइत्युभयालङ्कारोयं ॥ इतिकाव्यप्रकाशे मम्मटाचार्य्यविरचिते शब्दालङ्कारनिर्णयोनाम नवमउल्लासः ॥

अर्थालङ्कारानाह ॥ साधर्म्यमुपमा भेदे ॥ उपमानोपमेययोरेव नकार्य्यकारणादिकयोः साधर्म्यं भवतीति तयोरेव समानधर्म्मेण सम्बन्धउपमा ॥ भेदग्रहणमन्वयव्यवच्छेदाय पूर्णा लुप्ता च उपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानामुपादाने पूर्णा । एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता ॥ साग्रिमा श्रौत्यार्थीच भवेद्वाक्ये समासे तद्धिते तथा । अग्रिमापूर्णा॥ यथेववाशब्दायत्परास्तस्यैवोपमानताप्रतीतिरिति यद्यप्युपमानविशेषणान्येते तथापि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत्सम्बन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा ॥ तथैव तत्र तस्येवेत्यनेनेवार्थे विहितस्य वतेरुपादाने । तेन तुल्यं क्रियाचेद्वतिरित्यादावुपमेय एव ॥ तत्तुल्यमस्येत्यादौ चोपमानएव ॥ इदञ्चतच्च तुल्यमित्युभयत्रापि तुल्यादिशब्दानां विश्रान्तिरिति साम्यपर्य्यालोचनया तुल्यताप्रतीतिरिति साधर्म्यस्यार्थत्वा

त्वात्तुल्यादिपदोपादाने आर्थी । तद्वत्तेन तुल्य मित्यादिना विहितस्य वतेः स्थितौ ॥ इवेन नित्य समासोविभक्त्यलोपः पूर्व्वपदप्रकृतिस्वरत्वं चेति नित्यसमासे इवशब्दयोगे समासगा । क्रमेणोदा हरणं ॥

स्वप्नेषु समरेषु त्वां विजयश्रीर्न मुञ्चति। प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा॥ चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारकान्तिः। सरसिजमिदमाननञ्च तस्याः सममिति चेतसि संमदं विधत्ते ॥ अत्यायतैर्नियमकारिभि रुद्धतानां दिव्यैः प्रभाभिरनपायमयैरुपायैः। शौरिर्भुजैरिव चतुर्भिरदः सदायोलक्ष्मीविलासभवनैर्भुवनं वभार ॥ अवि तथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः। सुरतरुसदृशः सभवानभिलषणीयः चितीश्वरेन कस्य ॥ गाम्भीर्य्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत् । दुरालोकः स समरे निदाघाम्बर रत्नवत् ॥

स्वाधीनपतिका कान्तं भजमाना यथा लोको त्तरचमत्कारभूस्तथाजयश्रीस्त्वदासेवनेनेत्यादिना प्रतीयमानेन विना यद्यपि नोक्तं वैचित्र्यं ॥ वैचित्र्य ञ्चालङ्कारस्तथापि न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारो न खलु व्यङ्ग्यसंस्पर्शपरामर्शादत्र चारुताप्रतीति

रपि तु वाच्यवैचित्र्यप्रतिभासादेव । रसादिस्तु व्यङ्ग्योऽर्थोऽलंकारान्तरञ्च सर्व्वत्राव्यभिचारीत्यग णयित्वैव तदलङ्कारा उदाहृताः ॥ तद्रहितत्वेन तूदाहियप्रमाणाविरसतामावहन्तीति पूर्व्वापर विरुद्धाभिधानमिति न चोदनीयं ॥ तद्वर्मस्य लोपे स्यान्नश्रौती तद्धिते पुनः । धर्म्मः साधारणः तद्धिते कल्पबादौ चार्थ्येव ॥ तेन पञ्च ॥ उदाहरणं ॥

धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः । करणीयं वच स्रेतः सत्यंतस्यामृतं यथा ॥ आकृष्टकरवालोसौ सम्पराये परिभ्रमन् । प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः ॥ कर वाल इवाचारस्तस्य वागमृतोपमा । विषकल्पं मनोवेत्सि यदिजीवसि तत्सखे ॥

उपमानानुपादाने वाक्यगाऽथ समासगा ॥

सअलकरणपरवीसा मसिरिविअरणं सरसकव्वस्स । दीस इ अहवणसुम्मइ सरिसंअंसमेत्तेण ॥

कव्वस्सेत्यत्र कव्वसममिति सरिसमित्यत्र च णून मिति पाठे एषैव समासगा ॥ वादेर्लोपे समासे सा कर्माधारक्यचिक्यङि । कर्मकर्त्रोर्णमुलि ॥ वाश ब्द उपमाद्योतकइति वादेरुपमाप्रतिपादकस्य लोपेषट्समासेकर्मणोऽधिकरणाच्चोत्पन्नेन क्यचा

कर्त्तरिक्यङाच कर्मकर्त्रोरुपपदयोर्णमुलाचभवेत्।

उदाहरणं ॥

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना। नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥ तथा ॥ असितभुजगभीषणासि पत्रोरुहिरुहिकाहितचित्ततूर्णचारः। पुलकिततनुरुत्कपोल कान्तिः प्रतिभटविक्रमदर्शनेयमासीत् ॥ पौरं सुतीयति जनं समरान्तरेऽसावन्तःपुरीयति विचित्रचरित्रचुञ्चुः। नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य लसितानि सपत्नसेना ॥ मृधे निदाघघर्माशुदर्शं पश्यन्ति तं परे। स पुनः पार्थसञ्चारं सञ्चरत्यवनीपतिः ॥

एतद्विलोपे क्विप्समासगा एतयोर्धर्मवाद्योः ॥

उदाहरणं ॥

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः। यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥ परिपन्थिमनोराज्यशतैरपि दुराक्रमः। संपरायप्रवृत्तोऽसौ राजते राजकुञ्जरः ॥

धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते ॥

ठण्ठोल्लन्तोमरिहिसि कण्टअ कलिआइंकेअइवणाइं। मालइकुसुमसरिच्छं भमरभमन्तोण पाविहिसि ॥

कुसुमेण सममिति पाठे वाक्यगा क्वचि वाद्युप मेयासे। आसेनिरासे॥

अरातिविक्रमालोकविकस्वरविलोचनः। कृपाणोदग्रदो र्दण्डः स सहस्रायुधीयति॥

अत्रात्मा उपमेयः। त्रिलोपे च समासगा॥ त्रयाणां वादिधर्मोपमानानां॥ उदाहरणं॥

तरुणिमनिकृतावलोकनाललितविलासविलब्धविग्रहा। स्मरशरविसराचितान्तरा मृगनयना हरते मुनेर्मनः॥

अत्र सप्तम्युपमाने इत्यादिना यदासमास लोपौ भवतस्तदोदाहरणं॥

क्रूरस्याचारस्याय: शूलतयाध्यवसायात्। अयःशूलेना न्विच्छतीत्यायः शूलिकः॥

इत्यतिशयोक्तिर्नतु क्रूराचारोपमेयतैक्ष्ण्यधर्म वादीनां लोपे त्रिलोपियमुपमा। एवमेकोनविंशति र्लुप्ताः पूर्णाभिःसह पञ्चविंशतिः॥

अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता। मम्लौसाथ विषा देन पद्मिनीव हिमाम्भसा॥

इत्यभिन्ने साधारणे धर्मे॥

ज्योत्स्नेव नयनानन्दः सुरेव मदकारणं। प्रभुतेव समा कृष्टसर्व्वलोका नितम्बिनी॥

इति भिन्नेच तस्मिन्नेकस्यैव बहूपमानोपादाने मालोपमा॥ यथोत्तरमुपमेयस्योपमानत्वे पूर्ववद् भिन्नभिन्नधर्म्मत्वे॥

अनवरतकनकवितरणजललवभृतकरतरङ्गितार्थततेः। भणितिरिव मतिर्मतिरिव चेष्टाचेष्टेव कीर्त्तिरतिविमला॥ मतिरिव मूर्त्तिर्मधुरामूर्त्तिरिव सभाप्रभावचिता। तस्य सभेव जयश्रीःशक्या जेतुं नृपस्य न परेषाम्॥

इत्यादिका रशनोपमा च न लक्षिता एवम्विध वैचित्र्यसहस्रसम्भवात्॥ उक्तभेदानतिक्रमाच्च॥ उपमानोपमेयत्वे एकस्यैवैकवाक्यगे। अनन्वयः। उपमानान्तरसम्बन्धाभावोऽनन्वयः। उदाहरणं॥

नकेवलं भाति नितान्तकान्तिर्नितम्बिनीसैव नितम्बिनीव। यावद्विलासायुधलास्यवासास्तेतद्विलासा इव तद्विलासाः॥

विपर्य्यास उपमेयोपमानयोः॥ तयोरुपमानोपमेययोः परिवृत्तिरर्थाद्वाक्यद्वये इतरोपमानव्यवच्छेदपरा उपमेयेनोपमा इत्युपमेयोपमा। उदाहरणं॥

कमलेव मतिर्मतिरिव कमला तनुरिवविभाविभेव तनुः। धरणीव धृतिर्धृतिरिव धरणी सततं विभाति बत यस्य॥

सम्भावनमथोत्प्रेक्षाप्रकृतस्य समेन यत्। समेनोपमानेन ॥ उदाहरणं ॥

उन्मेषं यो मम न सहते जातिवैरीनिशायामिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्य्यदर्प्पः। नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षाल्लग्नामन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः॥ लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः। असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता॥

इत्यादौ व्यापनादिलेपनादिरूपतया सम्भावितं। ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः॥ भेदोक्तौ॥ यथा॥

अयं मार्त्तण्डः किं स खलु तुरगैः सप्तभिरितः कृशानुः किं सर्व्वाः प्रसरति दिशो नैष नियतम्। कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः॥

भेदोक्तावित्यनेन न केवलमयं निश्चयगर्भो यावन्निश्चयान्तोपि सन्देहः स्वीकृतः॥ यथा॥

इन्दुः किं क्व कलङ्कः सरसिजमेतत् किमम्बु कुत्र गतम्। ललितसविलासवचनैर्मुखमिति हरिणाक्षिनिश्चितं परतः॥

किन्तु निश्चयगर्भइव नात्र निश्चयः प्रतीयमान इति उपेक्षितोभट्टोद्भटेन। तदनुक्तौ॥ यथा॥

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः। वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो निर्म्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥

तद्रूपकमभेदो य उपमानोपमेययोः ॥ अतिसाम्यादनपह्नुतभेदयोरभेदः समस्तवस्तुविषयम् ॥ श्रौता आरोपिता यदा आरोपविषया इवारोप्यमाणा यदा शब्दोपात्तास्तदा समस्तानि वस्तूनि विषयो स्येति समस्तवस्तुविषयं आरोपिता इति बहुवचनमविवक्षितम् ॥ यथा ॥

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थीन्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम्। द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य छलेन ॥

अत्र पादत्रयमन्तर्धानरसिकत्वमारोपितधर्म्म एवेति रूपकपरिग्रहे साधकमस्तीति तत्सङ्कराशङ्का न कार्य्या ॥ अथवा न्यस्तं लाञ्छनमञ्जनं कुमुदिनीप्रोल्लाससिद्धिप्रदमिति चतुर्थः पाद एवं रूपकेणैव निर्व्वाहः ॥ श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्त्ति तत् । केचिदारोप्यमाणाः शब्दो

पात्ताः केचिदर्थसामर्थ्यादवसेया इत्येकदेशविव र्त्तनादेकदेशविवर्त्ति ॥ यथा ॥

जस्स रणंते उरएकरे कणंतस्स मण्डलग्गलअं। रससमुहो विसहसा परमुहीहोइ रिउसेणा ॥

अत्र रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोपात्तं॥ मण्डलाग्रलतायाः नायिकात्वं रिपुसेनायाश्च प्रतिनायिकात्वमर्थसामर्थ्यादवसीयते इत्येकदेशे विशेषेण वर्त्तनादेकदेशविवर्त्ति। साङ्गमेतत् उक्तद्विभेदं सावयवं निरङ्गन्तु शुद्धं॥ यथा॥

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्। अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां प्रवृत्तोस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥

माला तु पूर्ववत्। मालोपमायामिवैकस्मिन्बहव आरोपिताः॥ यथा॥

सौन्दर्य्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः कान्तेः कार्मणकर्म्मनर्म्मरहसामुल्लासनावासभूः। विद्यावक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रियावाणाः पञ्च शिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥

नियतारोपणोपायः स्यादारोपः परस्य यः।
तत्परं परितं श्लिष्टे वाचके भेदभाजि वा॥ यथा॥

विद्वन्मानसहंसवैरिकमलासङ्कोचदीप्तद्युते दुर्गामार्गण नीललोहितसमित्स्वीकारवैश्वानर। सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीमप्रभो साम्राज्यं वरवीरवत्सरशतं वैरिञ्च मुच्चैः क्रियाः॥

अत्र मानसमेव मानसम्। कमलायाः सङ्कोच एव कमलानामसङ्कोचः दुर्गाणाममार्गणमेवदुर्गायामार्गणं समितां स्वीकारएव समिधांस्वीकारः सत्येप्रीतिरेवसत्यामप्रीतिः। विजयः पराभवएव विजयोऽर्जुनः एवमारोपणनिमित्तो हंसादेरारोपः। यद्यपि शब्दार्थालङ्कारोयमित्युक्तं वक्ष्यते च तथापि प्रसिद्ध्यनुरोधादत्रोक्तः। एकदेशविवर्त्तिह्रीदमन्यैरप्यभिधीयते। भेदभाजि यथा॥

आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः पूर्व्वाद्रिः करवालचण्डमहसोलीलोपधानं श्रियः। संग्रामामृतसागरप्रमथन क्रीडा विधौ मन्दरो राजन् राजति वीरवैरिवनितावैधव्यदस्ते करः॥

अत्र जयादेर्भिन्नशब्दवाच्यस्य कुञ्जरत्वाद्यारोपे करस्यालानत्वाद्यारोपो युज्यते ॥

अलौकिकमहालोकप्रकाशितजगत्त्रयः । स्तूयते देवसद्वंशमुक्तारत्नं न कैर्भवान् ॥ निरवधि च निराश्रयञ्च यस्य स्थितमनिवर्त्तितकौतुकप्रपञ्चं प्रथम इह भवान्सकूर्ममूर्त्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥

इति च मालारूपकमपि परम्परितं द्रष्टव्यम् ॥

किसलयकरैर्लतानां करकमलैः कामिनां मनोजयति । नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥

इत्यादिरशनारूपकं नवैचित्र्यवदिति न लक्षितम् ॥ प्रकृतं यन्निषिध्यान्यत्साध्यते सात्वपह्नुतिः ॥ उपमेयमसत्यं कृत्वोपमानं सत्यतयायत्स्थाप्यते सात्वपह्नुतिः ॥ उदाहरणं ॥

अवाप्तः प्रागल्भ्यंपरिणतरुचः शैलतनये कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि । अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे रतिश्रान्ता शेते रजनिरमणी गाढमुरसि । इत्यन्वा ॥ बत सखि कियदेतत्पश्य वैरं स्मरस्य प्रियविरहकृशेऽस्मिन् रागिलोके तथाहि । उपवनसहकारोद्भासिभृङ्गच्छलेन प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥

अत्र हि न सभृङ्गाणि सहकाराण्यपि तु स कालकूटाः शरा इति प्रतीतिः एवं वा॥

अमुष्मिल्लावण्यामृतसरसि नूनं मृगदृशः स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः। यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे शिखाधूमस्येयं परिणमति रोमावलिवपुः॥

अत्र न रोमावलिर्धूमशिखेयमिति प्रतिपत्तिः॥ एवमियं भङ्ग्यन्तरैरप्यूह्या। श्लेषः सवाक्य एकस्मिन्यत्रानेकार्थता भवेत्। एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोर्थः स श्लेषः। उदाहरणं॥

उदयमयते दिङ्मालिन्यं निराकुरुतेतरां नयति निधनं निद्रामुद्रां प्रवर्त्तयति क्रियाः। रचयतितरां स्वैराचारप्रवर्त्तनकर्त्तनं वत वत लसत्तेजःपुञ्जोविभाति विभाकरः॥

अत्राभिधाया अनियन्त्रणात् द्वावप्यर्कभूपौ वाच्यौ॥ परोक्तिर्भेदकैः श्लिष्टैस्समासोक्तिः प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यान्नतु विशेष्यस्य सामर्थ्यादपि यदप्रकृतस्यार्थस्याभिधानं सा समासोक्तिः॥ उदाहरणं॥

लहिऊणतुज्झवाऊफंसं जोए सकोवि उल्लासो। जअलच्छी तुह विरहेणहोज्जला दुव्वलाणं सा॥

अत्र जयलक्ष्मीशब्दस्य केवलं कान्तावाचकत्वं नास्ति। निदर्शना। अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः। निदर्शनं दृष्टान्तकरणम्। उदाहरणं।

क्व सूर्य्यप्रभवोवंशः क्वचाल्पविषया मतिः। तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥

अत्र उडुपेन सागरतरणमिव मन्मत्या सूर्य्यवंशवर्णनमित्युपमायां पर्य्यवस्यति ॥ यथा वा ॥

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्। वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्॥

अत्र कथमन्यस्य लीलामन्योवहतीति तत्सदृशीमित्युपमायां पर्य्यवसानं॥

दोर्भ्यां तितीर्षति तरङ्गवती भुजङ्गमादातुमिच्छति करे हरिणाङ्कबिम्बम्। मेरुं लिलङ्घयिषति ध्रुवमेष देव यस्ते गुणान् गदितुमुद्यममादधाति॥

इत्यादौ मालारूपाप्येषा द्रष्टव्या॥ स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च सा परा। क्रिययैव स्वस्वरूपस्वकारणयोः सम्बन्धोयदवगम्यते सा परा निदर्शना॥ यथा॥

उन्नतं पदमवाप्य योलघुर्हेलयैव स पतेदिति भ्रुवं। शैल शेखरगतोदृषत्कणश्चारुमारुतधुतः पतत्यधः॥

अत्र पातक्रियया पतनस्य लाघवे सति उन्नत पदप्राप्तिरूपस्य कारणस्य च सम्बन्धः ख्याप्यते। अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया। अप्राक रणिकस्याभिधानेन प्राकरणिकस्याक्षेपोऽप्रस्तुत प्रशंसा। कार्य्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति।तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा। तदन्यस्य कारणादेः क्रमेणोदाहरणं॥

याता. किन्न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते नो कार्य्या नितरांकृशासि कथयत्येवं सवाष्पेमयि।लज्जामन्थर तारकेण निपतत्पीताश्रुणा चक्षुषा दृष्ट्वा मां हसितेन भाविम रणोत्साहस्तया सूचितः॥

अत्र प्रस्थानात्किमिति निवृत्तोसीति कार्य्ये पृष्टे कारणमभिहितम्॥

राजन् राजसुता न पाठयति मां देव्योपि तूष्णींस्थिताः कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते। इत्थं नाथ शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जराच्चित्रस्थानवलोक्यशून्य वलभावेकैकमाभाषते॥

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गता इति कारणे प्रस्तुते कार्य्यमुक्तम्॥

एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं वारिणोयन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि । अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः कुत्रोड्डीयगतोममेत्यनुदिनं निद्राति नान्तः शुचा ॥

अत्रास्थाने जडानां ममत्वसंभावना भवतीति सामान्ये प्रस्तुते विशेषः कथितः ॥

सुहृद्वधूवाष्पजलप्रमार्ज्जनं करोति वैरप्रतियातनेन यः ।
स एव पूज्यः सपुमान्सनीतिमात्सुजीवनं तस्य सभाजनं श्रियः ।

अत्र कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं प्रशमयसि तत्त्वमेव श्लाघ्यइति विशेषे प्रकृते सामान्यमुदितं।तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः श्लेषः समासोक्तिः सादृश्यमात्रं वा तुल्यात्तुल्यस्य ह्याक्षेपे हेतुः॥ क्रमेणोदाहरणं॥

पुंस्त्वादपि प्रविचलेद्यदि यद्यधोपि यायाद्यदि प्रणयनेन महानपि स्यात् । अभ्युद्धरेत्तदपि विश्वमितीदृशीयं केनापि दिक् प्रकटिता पुरुषोत्तमेन॥ येनास्यभ्युदितेन चन्द्रगमितः क्लान्तिं रवौ तत्र ते युज्येत प्रतिकर्त्तुमेव न पुनस्तस्यैव पादग्रहः। क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नोमनागस्त्वेवं जड

धामतातु भवतोयच्छोर्मि विस्फुर्ज्जते ॥ आदाय वारिपरितः सरितां मुखेभ्यः किं तावदर्ज्जितमनेन दुरर्णवेन । चारीकृतं च वडवादहने हुतञ्च पातालकुक्षिकुहरे विनिवेशितञ्च ॥

इयञ्च काचिद्वाच्ये प्रतीयमानार्थानध्यारोपेणैव भवति ॥ यथा ॥

अब्धेरम्भः स्थगितभुवनाभोगपातालकुक्षेः पोतोपायाइह हि बहवोलङ्घनेपि क्षमन्ते । आहोरिक्तः कथमपि भवेदेष दैवात्तदानीं कोनामस्यादवटकुहरालोकनेप्यस्य कल्पः ॥

काचिदध्यारोपेणैव यथा ॥

कस्त्वं भोःकथयामि दैवहतकं मां विद्धि शाखोटकं वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते नच्छायापि परोपकारकरणी मार्गस्थितस्यापि मे ॥

क्वचित्त्वशेषाध्यारोपेण ॥ यथा ॥

सोपूर्व्वोरसनाविपर्य्ययविधिस्तत्कर्णयोश्चापलं दृष्टिःसा मदविस्मृतस्वपरदिक्किं भूयसोक्तेन वा । सर्व्वं विस्मृतवानसि भ्रमरहे यद्वारणोद्याप्यसा वन्तः शून्यकरोनिषेव्यत इति भ्रातः कणषग्रहः ॥

अत्र रसनाविपर्य्यासः शून्यकरत्वञ्च भ्रमरस्यासेवनेन हेतुः कर्णचापलन्तु हेतुः । मदःप्रत्युत

सेवने निमित्तं । निगीर्य्याध्यवसानन्तु प्रकृतस्य परेण यत् । प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनं । कार्य्यकारणयोर्यश्च पौर्वापर्य्यविपर्य्ययः विज्ञेयातिशयोक्तिः सा । उपमानेनान्तर्निगीर्णस्यो पमेयस्य यदध्यवसानं सैका ॥ यथा ॥

कमलमनम्भसि कमले च कुवलये तानि कनकलतिका याम् । सा च सुकुमारसुभगेत्युत्पातपरं परा केयं ॥

अत्र मुखादिकमलादिरूपतयाध्यवसितम् यच्च तदेवान्यत्वेनाध्यवसीयते सा परा ॥ यथा ॥

अण्णंलउहत्तणअं अण्णा विअ काइवत्तणच्छाआ । सामा सामण्णपआ वइणो रेहधिअणहोइ ॥

यद्यर्थस्य यदिशब्देन चेच्छब्देन वा उक्तौ यत्कल्पनमर्थादसंभविनोर्थस्य सा तृतीया ॥ यथा ॥

राकायामकलङ्कञ्चेदमृतांशोर्भवेद्वपुः । तस्यामुखं तदा साम्यपराभवमवाप्नुयात् ॥

कारणस्य शीघ्रकारितां वक्तुं कार्य्यस्य पूर्व्व मुक्तौ चतुर्थी ॥ यथा ॥

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापवाणेन चरमं रमणीवल्लभलोचनविषयं त्वया भजता ॥

प्रतिवस्तूपमा तु सा। सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ॥ साधारणोधर्म्म उपमेयवाक्ये चोपमानवाक्ये च कथितपदत्वस्य दुष्टतयाऽभिहितत्वाच्छब्दभेदेन यदुपादीयते सा वस्तुनोवाक्यार्थस्योपमानत्वात्प्रतिवस्तूपमा यथा ॥

देवीभावङ्गमिता परिवारपदंकथं भजत्येषा। न खलु परिभोगयोग्यन्दैवतरूपाङ्कितं रत्नं। यदिदहत्यनलोत्रकिमद्भुतं यदिचगौरवमद्रिषु किं ततः। लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥

इत्यादिमालाप्रतिवस्तूपमा द्रष्टव्या एवमन्यत्राप्यनुसर्त्तव्यम् दृष्टान्तःपुनरेतेषां सर्व्वेषां प्रतिविम्बनं एतेषां साधारणधर्म्मादीनां दृष्टान्तः निश्चयो यत्र स दृष्टान्तः ॥

त्वयि दृष्टएव तस्यानिर्वाति मनोमनोभवज्वलितम्। आलोके हि हिमांशोर्विकसति कुमुदं कुमुद्वत्याः ॥

एष साधर्म्येण वैधर्म्येणतु।

तवाहवे साहसकर्म्मशर्म्मणः करं कृपाणान्तिकमानिनीषतः। भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांशवः ॥

सकृद्वृत्तिस्तु धर्म्मस्य प्रकृताप्रकृतात्मनाम्।
सैव क्रियासु वह्वीषु कारकस्येति दीपकं। प्राकरणिकानामर्थादुपमानोपमेयानां धर्म्मः क्रियादिरेकवारमेव यदुपादीयते तदेकस्थैव समस्तवाक्यदीपनाद्दीपकं॥ यथा॥

किवणाणंधणंणा आणंफणमणीकेसराइंसीहाणम्। कुलवालिआणंथणा कुत्तोघिप्पन्ति अमुआणं॥

कारकस्य च वह्वीषु क्रियासु सकृद्वृत्तिर्दीपकं॥ यथा॥

खिद्यति कूणति वेल्लति विवलति निमिषति विलोकयति तिर्य्यक्। अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया बधूः शयने॥

मालादीपकमाद्यञ्चेद्यथोत्तरगुणावहं पूर्व्वेण पूर्व्वेणवस्तुनोत्तरमुत्तरं चेदुपक्रियते तन्मालादीपकं॥ यथा॥

संग्रामाङ्गणमागतेन भवता चापे समारोपिते देवाकर्णय येन येन सहसायद्यत्समासादितं। कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलन्तेन त्वं भवताचकीर्त्तिरतुला कीर्त्त्या चलोकत्रयं॥

नियतानां सकृद्धर्मः सापुनस्तुल्ययोगिता। नियतानां प्राकरणिकानामेवाप्राकरणिकानामेव वा ॥ क्रमेणोदाहरणं॥

पाण्डुक्षामं वदनं हृदयं सरसं तवालसञ्च वपुः। आवेदयति नितान्तं क्षेत्रियरोगं सखिहृदन्तः॥ कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का। अमृतममृतरश्मिरम्बुजन्मप्रतिहतमेकपदे तवाननस्य॥

उपमानाद्यदन्यस्य व्यतिरेकः स एव सः। अन्यस्योपमेयस्य व्यतिरेकआधिक्यं॥ यथा॥

क्षीणः क्षीणोपि शशी भूयोभूयोऽभिवर्द्धते सत्यं। विरम प्रसीद सुन्दरि यौवनमनिवर्त्तियातन्तु॥

इत्यादावुपमानस्योपमेयादाधिक्यमिति यत्केनचिदुक्तन्तदयुक्तं अत्र यौवनगताऽस्थैर्य्यस्याधिक्यं हि विवक्षितं हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते। शब्दार्थाभ्यामथाक्षिप्ते श्लिष्टे तद्दत्त्रिरष्टतत्। व्यतिरेकस्य हेतुरुपमेयगतमुत्कर्षनिमित्तमुपमानगतमपकर्षकारणं तयोर्द्वयोरुक्तिः। एकतरस्य द्वयोर्वानुक्तिरित्यनुक्तित्रयं एतद्भेदचतुष्टयमुपमानोपमेयभावे शब्देन प्रतिपादिते। अर्थेन च

क्रमेणोक्तौ चत्वारएव भेदाः। आक्षिप्ते चौपम्ये तावन्तएव। एवं द्वादश एते श्लेषेपि भवन्तीति चतुर्विंशतिभेदाः। क्रमेणोदाहरणं॥

असि मात्रसहायस्य प्रभूतारिपराभवे। अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः॥

अत्रैव तुच्छेति महाधृतेरित्यनयोः पर्य्यायेण युगपद्वाऽनुपादानेऽन्यभेदत्रयं। एवमन्येष्वपि द्रष्टव्यं। अत्रेवशब्दस्य सद्भावाच्छाब्दमौपम्यम्॥

असिमात्रसहायोपि प्रभूतारिपराभवे। नैवान्यतुच्छजनवत्सगर्वोयं धृतेर्निधिः॥

तुल्यार्थे वतिरित्यार्थमौपम्यं॥

इयं सुनयना दासीकृततामरसश्रिया। आननेनाकलङ्केन जयतीन्दुं कलङ्कितं॥

अत्रेवादितुल्यादि पद विरहे आक्षिप्तैवोपमा॥

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः। अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः॥

अत्रेवार्थे वतिः। गुणशब्दः श्लिष्टः। शाब्दमौपम्यं॥

अखण्डमण्डलः श्रीमान्पश्यैष पृथिवीपतिः। न निशाकरवज्जातु कलावैकल्यमागतः॥

अत्र तुल्यार्थे वतिः। कलाशब्दः श्लिष्टः माला प्रतिवस्तूपमावन्मालाव्यतिरेकोपि सम्भवति तस्यापि भेदा एवमूह्याः दिङ्मात्रञ्चोदाह्रियते। यथा॥

हरवन्न विषमदृष्टिर्हरिवन्न विभोविधूतविततवृषः। रविवन्न चातिदुःसहकरतापितभूः कदाचिदसि॥

अत्र तुल्यार्थेवतिः। विषमादयश्च शब्दाःश्लिष्टाः॥

नित्योदितप्रतापेन त्रियामामीलितप्रभः। भास्वतानेन भूपेन भास्वानेष विनिर्ज्जितः॥

अत्र ह्याक्षिप्तैवोपमा। भास्वतेति श्लिष्टः॥ यथा वा॥

स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं बिम्बप्रभाधरमकृत्रिमहृद्यगन्धं। यूनामतीव पिबतां रजनीषु यत्र तृष्णां जहार मधु माऽननमङ्गनानाम्॥

अत्रेवादीनां तुल्यादीनाञ्च पदानामभावेपि श्लिष्टविशेषणाक्षिप्तैवोपमा प्रतीयते एवंजातीयकाः श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादानेऽन्येपिभेदाः सम्भवन्ति तेप्यनयैवदिशा द्रष्टव्याः॥ निषेधोवक्तुमिष्टस्य योविशेषाभिधित्सया। वक्ष्यमाणोक्तविषयः स आक्षेपोद्विधा मतः। विवक्षितस्य प्राकरणिकत्वादनुपसर्ज्जनीकार्य्यस्याशक्यवक्तव्यत्वमतिप्रसि

द्ब्त्वं वा विशेषं वक्तुं निषेधोनिषेधइव यः स वक्ष्यमाणविषयउक्तविषयश्चेति द्विधा आक्षेपः॥ क्रमेणोदाहरणं॥

एएहिकिं पिकीए विकएण णिक्खिव्वभणामि अलमह वा। अविआरिअकज्जारम्भआरिणी मरउण भणिस्सं॥ ज्योत्स्नामौक्तिकदामचन्दनरसः शीतांशुकान्तद्रवः कर्पूरं कदलीमृणालवलयान्यम्भोजिनीपल्लवाः। अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्करव्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे॥

क्रियायाः प्रतिषेधेपि फलव्यक्तिर्विभावना। हेतुरूपक्रियायानिषेधेपि तत्फलप्रकाशनं विभावना॥ यथा॥

कुसुमितलताभिरहताप्यधत्तरुजमलिकुलैरदष्टापि। परिवर्त्तते स्म नलिनीलहरीभिरलोलिताप्यघूर्णत सा॥

विशेषोक्तिरखण्डेषु कारणेषु फलावचः। मिलितेष्वपि कारणेषु कार्य्यस्याकथनं विशेषोक्तिः अनुक्तनिमित्ता। उक्तनिमित्ता। अचिन्त्यनिमित्ता च। क्रमेणोदाहरणं॥

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदंपराप्ते। श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा॥ कर्पूर

इव दग्धापि शक्तिमान्योजने जने। नमोस्त्ववार्य्यवीर्य्याय तस्मै मकरकेतवे॥ स एकस्त्रीणि जयति जगन्ति कुसुमायुधः। हरतापि तनुं यस्य शम्भुना न वलं हृतं॥

यथा संख्यंक्रमेणैव क्रमिकाणां समन्वयः॥ यथा॥

एकस्त्रिधा वससि चेतसि चित्रमत्र देवद्विषाञ्च विदुषाञ्च मृगीदृशाञ्च। तापञ्च संमदभरञ्च रतिञ्च पुष्णन् शौर्य्योष्मणा च विनयेन च लीलया च॥

सामान्योवा विशेषोवा तदन्येन समर्थ्यते। यत्र सोर्थान्तरन्यासः साधर्म्येणेतरेण वा। साधर्म्येण वैधर्म्येणवा सामान्यं विशेषेण यत्समर्थ्यते विशेषो वा सामान्येन सोऽर्थान्तरन्यासः॥ क्रमेणोदाहरणं॥

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतं। पश्यति पीतोपहतः शशिशुभ्रं शङ्खमपि पीतं॥ सुसितवसनालङ्कारायां कदाचन कौमुदीमहसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः। तदनु भवतः कीर्त्तिःकेनाप्यगीयत येन सा प्रियगृहमगान्मुक्ताशङ्का क नासिशुभप्रदः॥ गुणानामेव दौरात्म्याद्धुरिधुर्य्योनियुज्यते। असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः॥ अहोहि मे वह्वपराद्धमायुषा यदप्रियं वाच्यमिदं

मयेदृशं। तएव धन्याः सुहृदः पराभवं जगत्यदृष्टैव हि येक्षयं गताः ॥

विरोधःसोविरोधेपि विरुद्धत्वेन यद्वचः। वस्तुवृत्तेरविरुद्धेपि विरुद्धयोरिव यदभिधानं सविरोधः। जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धास्याद्गुणस्त्रिभिः॥ क्रियाद्वाभ्यामपि द्रव्यं द्रव्येणैवेति ते दश॥

अभिनवनलिनीकिसलयमृणालवलयादिदवदहनराशिः सुभगकुरङ्गदृशोस्याविधिवशतस्त्वद्वियोगपविपाते। गिरयोप्यनुन्नतियुजोमरुदप्यचलोब्धयोप्यगभीराः विश्वम्भराप्यतिलघुर्नरनाथ तवान्तिके नियतं ॥ येषां कण्ठपरिग्रहप्रणयितां संप्राप्य धाराधरस्तीक्ष्णः सोप्यनुरज्यत च कमपि स्नेहं परां प्रीतिं च। तेषां सङ्गरसङ्गसक्तमनसां राज्ञां त्वया भूपते पांशूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकं॥ सृजति च जगदिदमवति च संहरतिच हेलयैव योनियतं। अवसरवशतः शफरोजनार्दनः सोपि चित्रमिदं॥ सततं मुसलासक्ता बहुतरगृहकर्म्मघटनया नृपते। द्विजपत्नीनां कठिनाः सति भवति कराः सरोज सुकुमाराः॥ पेशलमपि खलवचनं दहतितरां मानसं सुतत्त्वविदां। परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ॥ क्रौञ्चाद्रिरुद्दामदृषद्दृढोयं यन्मार्गणानर्गलशातपाते। अभून्नवांभोजदलाभिजातः सभार्गवः सत्य

मपूर्वसर्गः ॥ परिच्छेदातीतः सकलवचनानामविषयः पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्। विवेकप्रध्वंसादुपचितमहामोहगहनो विकारः कोऽप्यन्तर्जडयति च तापञ्च कुरुते॥ अयं वारामेको निलय इति रत्नाकर इति श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः। क एवं जानीते निजकरपुटीकोटरगतं क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः॥ समदमतङ्गजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात्। क्षितितिलकलयि तटजुषि शङ्करचूडापगापि कालिन्दी॥

**स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनं।**

**स्वयोस्तदेकाश्रययोः रूपं वर्णः संस्थानञ्च। उदाहरणं॥**

पश्चादङ्घ्री प्रसार्य्य त्रिकनति विततं द्राघयित्वाङ्गमुच्चैरासज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय। घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण॥

**व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा॥**

**व्याजरूपा व्याजेन वा स्तुतिः। क्रमेणोदाहरणं॥**

हित्वा त्वामुपरोधबन्ध्यमनसां मन्येन मौलिः परो लज्जावर्जनमन्तरेण नरमामन्यत्र संदृश्यते। यस्त्यागन्तनुतेतरां

मुखशतैरेत्यागतायाः श्रियः प्राप्त्यागकृतावसाननमपिलप्येव यस्याः स्थितिः ॥ हेहेलाजितबोधिसत्व वचसां किं विस्तरैस्तो यधेनास्खिलसदृशः परः परहिताधाने गृहीतव्रतः। तृष्यत्पा न्थजनोपकारघटनावैमुख्यलब्धायशोभारप्रोद्दहने करोषि कृपया साहायकं यन्मरोः ॥

सासहोक्तिः सहार्थस्य बलादेकं द्विवाचकं॥ एकार्थाभिधायकमपि सहार्थबलाद्यदुभयस्यावग मकं सा सहोक्तिः ॥ यथा ॥

सहदिअसणिसाहिं दीहरासासदण्डा सह मणिवलएहिं वाहधारा गलन्ति। तुह सुहअविओए तीएउव्वेइणीए सह अतणुलदाए दुव्वलाजीविदासा ॥

श्वासदण्डादिगतं दीर्घत्वादिशब्दंदिवसनिशा दिगतं तु सहार्थसामर्थ्यात्प्रतिपद्यते। विनोक्तिः साविनान्येन यत्रान्यः सन्नचेतरः। क्वचिदशोभनः। क्वचिच्छोभनः ॥ क्रमेणोदाहरणं ॥

अरुचिर्निशया विना शशी शशिना सापि विना महत्तमः। उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः ॥ मृग लोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः। अमृत द्युतिसुन्दराशयोयं सुहृदा तेन विना नरेन्द्रसूनुः ॥

परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः। परिवृत्तिरलङ्कारः॥ उदाहरणं॥

लतानामेतासामुदितकुसुमानां मरुदयं मतं लास्यं दत्वा श्रयति भृशमामोदमसमं। लताखध्वन्यानामहह दृशमादाय सहसा ददत्याधिव्याधिभ्रमरुदितमोहव्यतिकरं॥

अत्र प्रथमेऽर्द्धे समेन समस्य द्वितीये उत्तमेन न्यूनस्य॥

नानाविधप्रहरणैर्नृपसंप्रहारे स्वीकृत्य दारुणनिनादवतः प्रहारान्। दृप्तारिवीरविसरेण वसुन्धरेयं निर्व्विप्रलम्भपरिरम्भविधिर्वितीर्णा॥

अत्र न्यूनेनोत्तमस्य। प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः। तद्भाविकं। भूताश्च भाविनश्चेति द्वन्द्वः। भावः कवेरभिप्रायोऽस्तीति भाविकं॥ उदाहरणं॥

आसीदञ्जनमत्रेति पश्यामि तव लोचने। भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिं॥

अत्राद्ये भूतस्य द्वितीये भाविनो दर्शनं। काव्यलिङ्गं हेतोर्वाक्यपदार्थता॥ यथा॥

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान्। नमन्मुक्तः सम्प्रत्यहमतनुरग्रेऽप्यन तिभाग्महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥

अनेकपदार्थता यथा ॥

प्रणयसखीसलीलपरिहासरसाधिगतैर्ललितशिरीषपुष्प हननैरपि ताम्यति यत्। वपुषि वधाय तत्र तव शस्त्रमुपक्षि पतः पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥

एकपदार्थता यथा ॥

भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं हा सोपान परंपरां गिरिसुता कान्तालयालङ्कृतिं। अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा लोकोच्छेदिनि मोक्षनामनि महा मोहे निधीयामहे ॥

एष्वपराधद्वये पूर्वापरजन्मनोरनमनं भुजपाते शस्त्रोपक्षेपो महामोहे सुखालोकोच्छेदित्वञ्च यथा क्रममुक्तरूपो हेतुः। पर्यायोक्तं विना वाच्य वाचकत्वेन वस्तु यत्। वाच्यवाचकभावव्यतिरि क्तेनावगमनव्यापारेण यत्प्रतिपादनं तत्पर्य्यायेण भङ्ग्यन्तरेण कथनात्पर्य्यायोक्तं ॥ उदाहरणं ॥

यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता। मदेनैरावण मुखमानेन हृदये हरेः ॥

अत्रैरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्य मपि शब्देनोच्यते तेन यदेवोच्यते तदेव व्यङ्ग्यं यथा तु व्यङ्ग्यं न तथोच्यते। यथा गवि शुक्ले चलति दृष्टे गौः शुक्लश्चलतीति विकल्पो यदेव दृश्यते तदेव विकल्पयति नतु यथा दृष्टं तथा यतोभिन्ना संसृष्टत्वेन दृष्टं भेदसंसर्गाभ्यां विकल्पयति उदात्तं वस्तुनः सम्पत्समृद्धियोगः॥ यथा॥

मुक्ताःकेलिविसूत्रहारगलिताः सम्मार्ज्जनीभिर्हृताः प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः। दूराद्दाडिम वीज शङ्कितधियः कर्षन्ति केलीशुका यद्विद्वद्भवनेषु भोजनृपते स्तत्त्यागलीलायितं॥

महतांचोपलक्षणं। उपलक्षणमङ्गभावः। अर्था दुपलक्षणीये ऽर्थे॥ उदाहरणं॥

तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी। निव सन्बाहुसहायश्चकार रक्षःक्षयं रामः॥

नचात्र वीरोरसस्तस्येहाङ्गत्वात् तत्सिद्धिहेता वेकस्मिन्यत्रान्यत्तत्करं भवेत्। समुच्चयोसौ तस्य प्रस्तुतस्य कार्य्यस्यैकस्मिन्साधके स्थिते साधकान्त राणि यत्र सम्भवति स समुच्चयः॥ उदाहरणं॥

दुर्व्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोत्युत्सुकं गाढं प्रेम नवं वयोतिकठिनाः प्राणाः कुलं निर्मलं। स्त्रीत्वं धैर्य्यविरोधि मन्मथसुहृत्कालः कृतान्तोक्षमी नोसख्यश्चतुराः कथंनु विरहः सोढव्य इत्थं शठः॥

अत्र विरहासहत्वं स्मरमार्गणाएवकुर्वते तदु प्रियतमदूरस्थित्याद्युपात्तं एषएव समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पर्य्यवस्यतीति न पृथग्लच्यते तथाहि॥

कुलममलिनं भद्रा मूर्त्तिर्मतिः श्रुतशालिनी भुजबलमबलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितं। प्रकृतिः सुभगा ह्येते भावा अमीभिरयं जनो व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः॥

अत्र सतां योगः उक्तोदाहरणे त्वसतां योगः॥

शशी दिवसधूसरो गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः। प्रभुर्द्धनपरायणः सततदुर्गतः सज्जनो नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे॥

अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाशोभनयोगः सत्वन्या युगपद्या गुणक्रियाः गुणौ च क्रिये च गुणक्रिये च गुणक्रियाः॥ क्रमेणोदाहरणं॥

विदलितसकलारिकुलं तव बलमिदमभवदाशुविमलञ्च प्रखलमुखानि नराधिप मलिनानि च तानि जातानि। अयमेक

पदे तयावियोगः प्रियया चोपनतः सुदुःसहोमे॥ नववारिध रोदयादहोभिर्भवितव्यञ्च निरातपत्वरम्यैः। कलुषञ्च तवाहि तेष्व कस्मात्सितपङ्केरुहसोदरश्रिचचुः॥ पतितञ्च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदाङ्कटाचैः॥

धुनोति चासिं तनुते च कीर्त्तिमित्यादेः कृपाण पाणिश्च भवान्रणक्षितौ ससाधुवादाश्च सुराः सुरालयेइत्यादेश्च दर्शनाद्व्यधिकरणे इत्येकस्मि न्देशइतिच नवाच्यम् एकं क्रमेणानेकस्मिन् पर्यायः एकंवस्तु क्रमेणानेकस्मिन्भवति क्रियतेवा सपर्य्यायः॥ क्रमेणोदाहरणं॥

श्रोणीभारस्त्यजति तनुतां सेवते मध्यभागः पद्भ्यांमुक्ता स्तरलगतयः संश्रितालोचनाभ्यां। धत्ते वचः कुचसचिवता मद्वितीयञ्च वक्रं तद्गात्राणां गुणविनिमयः कल्पितोयौवनेन॥ यथावा। नन्वाश्रयस्थितिरियं तव कालकूट केनोत्तरोत्तर विशिष्टपदोपदिष्टा। प्रागर्णवस्य हृदये वृषलक्ष्मणोथ कण्ठे धुना वससि वाचि पुनः खलानाम्॥ यथावा॥ बिम्बोष्ठ एव रागस्ते तन्वि पूर्व्वमदृश्यत। अधुनाहृदयेप्येष मृगशावाक्षि दृश्यते॥

रागस्य वस्तुतोभेदेप्येकतयाध्यवसितत्वादेक त्वमविरुद्धम्॥

तत्ताणसिरिसहो अरर अणाहरणम्मिहिअअमेक्करसं।
विंवाहरेपिआणं निवेसिअं कुसुमवाणेन ॥

अन्यस्ततोऽन्यथा अनेकमेकस्मिन्क्रमेणभवति क्रियते वासोऽन्यः। क्रमेणोदाहरणं॥

मधुरिमरुचिरं वचः खलानाममृतमहोप्रथमं पृथु व्यनक्ति अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव॥ तद्गेहं नतभित्तिमन्दिरमिदं लब्धावकाशं दिवः सा धेनुर्जरती न दन्तिकरिणामेता घनाभाघटाः। सचुद्रोमुशल ध्वनिः कलमिदं सङ्गीतकं योषितामाश्चर्य्यं दिवसैर्द्विजोयमियतीं भूमिं समारोपितः॥

अत्रैकस्यैव हानोपादानयोरविवक्षितत्वान्न परिवृत्तिः अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः। पक्षधर्मान्वयव्यतिरेकित्वेन त्रिरूपोहेतुः साधनं धर्मिण्ययोगव्यवच्छेदोव्यापकस्य साध्यं यथा॥

यत्रैतालहरीचलाचलदृशोव्यापारयन्तिभ्रुवं तत्रैव प्रपतन्ति सन्ततममी मर्मस्पृशोमार्गणाः। तच्चक्रीकृतचापमञ्चितशर प्रेङ्खत्करः क्रोधनोधावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः॥

साध्यसाधनयोः पौर्व्वापर्य्यविकल्पे न किञ्चिद्वैचित्र्यमिति न तथादर्शितं विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः। अर्थाद्विशेष्यस्य॥ उदाहरणं॥

महौजसो मानधना धनार्च्चिता धनुर्भृतः संयति लब्धकीर्त्तयः। न संहतास्तस्य नभेदवृत्तयः प्रियाणि वाञ्छन्त्यसुभिः समीहितुं॥

यद्यप्यपुष्टार्थस्य दोषताभिधानात्तन्निराकरणेन पुष्टार्थस्वीकारः कृतस्तथाप्येकनिष्ठत्वेन बहूनां विशेषणानामेवमुपन्यासे वैचित्र्यमित्यलङ्कारमध्ये गणितः व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनं। निगूढमपि वस्तुनोरूपं कथमपि प्रभिन्नं केनापि व्यपदेशेन यदपह्नूयते सा व्याजोक्तिः नचैषापह्नुतिः प्रकृताप्रकृतोभयनिष्ठस्य साम्यस्येहासम्भवात्॥ उदाहरणं॥

शैलेन्द्रप्रतिपाद्यमानगिरिजा हस्तोपगूढोल्लसद्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः। हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं शैलान्तःपुरमातृमण्डलगणैर्दृष्टोवताद्वः शिवः॥

अत्र पुलकवेपथू सात्विकरूपतया प्रसृतौ शैत्यकारणतया प्रकाशितत्वादपलपितस्वरूपौ व्याजोक्तिं प्रयोजयतः किञ्चित्पृष्टमपृष्टं वा कथितं यत्प्रकल्प्यते। तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता। प्रमाणान्तरावगतमपि वस्तु शब्देन प्रति

पादितं प्रयोजनान्तराभावात्सदृशवस्त्वन्तरव्यव च्छेदाय यत्पर्य्यवस्यति सा भवेत्परिसंख्या अत्र च कथनं प्रश्नपर्व्वकं तदन्यथाच परिदृष्टं तथोभयत्र व्यपोह्यमानस्य प्रतीयमानता वाच्यत्वं चेति चत्वारोभेदाः। क्रमेणोदाहरणं॥

किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः। किमाराध्यं पुण्यं किमभिलषणी यश्च करुणा यदासक्त्या चेतोनिरवधि विमुक्तौ प्रभवति॥ किंभूषणं सुदृढमत्र यशोन रत्नं किं कार्यमार्य्यचरितं सुकृतं न दोषः। किञ्चचुरप्रतिहतं धिषणा न नेत्रं जानाति कस्त्वदपरः सदसद्विवेकम्। कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते। काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति॥ भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे। चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम्॥

यथोत्तरं चेत्पूर्व्वस्य पर्व्वस्यार्थस्य हेतुता। तदा कारणमालास्यात् उत्तरमुत्तरं प्रति यथोत्तरं॥ उदाहरणं॥

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षोविनयादवाप्यते। गुणप्रकर्षेण जनोनुरज्यते जनानुरागप्रभवाहि संपदः॥

हेतुमता सह हेतोरभिधानमभेदतो हेतुरिति हेत्वलङ्कारेण लक्षितः आयुर्घृतमित्यादिरूपोह्येष नभूषणतां कदाचिदर्हति वैचित्र्याभावात्॥

अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः।
रम्योयमेति संप्रति लोकोत्कण्ठाकरः कालः॥

इत्यत्र काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुर्नपुन र्हेत्वलङ्कारः कल्पनयेति पूर्वोक्तं काव्यलिङ्गमेव हेतुः क्रियया तु परस्परंवस्तुनोर्जननेऽन्योन्यं अर्थयोरेकक्रियामुखेन परस्परंकारणत्वे सत्यन्योन्यंनामालङ्कारः॥ उदाहरणं॥

हंसाणंसरेहिं सिरीसारिज्जइअहसराणंहंसेहिं। अस्रोसं विअएएअप्पाणं णवरगरूअन्ति॥

अत्रोभयेषामपि परस्परजनकता मिथः श्रीसारतासंपादनद्वारेण उत्तरश्रुतिमात्रतः प्रश्नस्योन्नयनं यत्र क्रियते तत्र वासति। असकृद्यदसंभाव्यमुत्तरं स्यात्तदुत्तरम् प्रतिवचनोपलम्भादेव पूर्व्ववाक्यं यत्र कल्प्यते तदेकंतावदुत्तरं॥ उदाहरणं॥

वाणिअअ हत्थिदन्ताकत्तो अह्माणं वग्घकत्तीअ। जावलुलिआलअ मुहीं घरम्मि परिसक्कइसोह्णा॥

हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी मूल्येन ताः प्रयच्छेति क्रेतुर्वचनममुना वाक्येन समुन्नीयते। नचैतत्काव्यलिङ्गमुत्तरस्य ताद्रूप्यानुपपत्तेः नहि प्रश्नस्य प्रतिवचनं जनको हेतुः नापीदमनुमानं एकधर्म्मिनिष्ठतया साध्यसाधनयोरनिर्द्देशादित्यलङ्कारान्तरमेवोत्तरं साधीयः प्रश्नादनन्तरं लोकातिक्रान्तगोचरतया यदसम्भाव्यरूपं प्रतिवचनं स्यात्तदपरमुत्तरं अनयोश्च सकृदुपादानेन चारुता प्रतीतिरित्यसकृदित्युक्तं ॥ उदाहरणं ॥

का विसमा देव्व गई किं दुल्लहं जणो गुणग्गाही। किं सोकखं सुकलत्तं किं दुःखं जं खलो लोओ ॥

प्रश्नपरिसंख्यायामन्यव्यपोह एव तात्पर्य्यमिह तु वाच्य एव विश्रान्तिरित्यनयोर्विवेकः कुतोपि लक्षितः सूक्ष्मोप्यर्थोन्यस्मै प्रकाश्यते। धर्मेणकेनचिद्यत्तत्सूक्ष्मं परिचक्षते। कुतोप्याकारादिङ्गिताद्वा सूक्ष्मस्तीक्ष्णमतिसंवेद्यः ॥ उदाहरणं ॥

वक्रस्यन्दिस्वेदविन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे। पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥

अत्राकृतिमालोक्य कयापि वितर्कितं पुरुषायितमसिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतं पुंसामेव कृपाणपाणिता योग्यत्वात् यथावा सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ईषन्नेत्रार्पिता कृतं लीलापद्मं निमीलितम् अत्रजिज्ञासितः सङ्केतकालः कयाचिदिङ्गितमात्रेण विदितोनिशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः। उत्तरोत्तरमुत्कर्षोभवेत्सारः परावधिः। परः पर्य्यन्तभागोवधिर्यस्य धाराधिरोहितया तत्रैवोत्कर्षस्य विश्रान्तेः॥ उदाहरणं॥

राज्ये सारं वसुधा वसुधायां पुरं पुरे सौधं सौधे तल्पं तल्पे वराङ्गनानङ्गसर्व्वस्वं॥ भिन्नदेशतयात्यन्तं कार्य्यकारणभूतयोः। युगपद्धर्म्मयोर्यत्र ख्यातिः सास्यादसङ्गतिः इहयद्देशकारणं तद्देशमेव कार्य्यमुत्पद्यमानं दृष्टं॥

यथा धूमादि यत्रहेतुफलरूपयोरपि धर्म्मयोः केनाप्यतिशयेन नानादेशतया युगपदवभासनं सा तयोः स्वभावोत्पन्नपरस्परसङ्गतित्यागादसङ्गतिः॥ उदाहरणं॥

जस्सेअवणोतस्सेअवेअणाभणइ तं जणो अलिअं। दन्तक्खअं कवोले वहूए वेअणासवत्तीणं॥

एषा च विरोधबाधिनी न विरोधः भिन्नाधारतयैव द्वयोरिह विरोधितायाः प्रतिभासात् विरोधेतुविरोधित्वमेकाश्रयनिष्ठमनुक्तमपि पर्य्यवसितमपवादविषयपरिहारेणोत्सर्गस्य व्यवस्थितेस्तथा चेदं निदर्शितं। समाधिः सुकरं कार्य्यंकारणान्तरयोगतः। साधनान्तरोपकृतेन कर्त्त्रा यदक्लेशेन कार्य्यमारब्धमाधीयते स समाधिर्नाम॥ उदाहरणं॥

मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः। उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितं॥

समं योग्यतया योगो यदि संभावितः क्वचित्। इदमनयोः श्लाघ्यमिति योग्यतया सम्बन्धस्य नियतविषयमध्यवसानं चेत्तदा समं तत्सद्योगेऽसद्योगे च॥ उदाहरणं॥

धातुःशिल्पातिशयनिकषस्थानमेषा मृगाक्षीरूपे देवोऽप्ययमनुपमोदत्तपत्रः स्मरस्य। जातं दैवात्सदृशमनयोः सङ्गतं यत्तदेतच्छृङ्गारस्योपनतमधुना राज्यमेकातपत्रं॥ यथावा। चित्रं चित्रं वत वत महच्चित्रमेतद्विचित्रं जातो दैवादुचितरचनासन्निधाता विधाता। यन्निम्बानां परिणतफलस्फीतिरास्वादनीया यच्चैतस्याः कवलनकलाकोविदः काकलोकः॥

क्वचिद्यदतिवैधर्म्यान्न श्लेषोघटनामियात्। कर्त्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत्। गुणक्रियाभ्यां कार्य्यस्य कारणस्य गुणक्रिये। क्रमेण च विरुद्धे यत्स एष विषमोमतः। द्वयोरत्यन्तविलक्षणतया यदनुपपद्यमानतयैव योगः प्रतीयते यच्च किञ्चिदारभमाणः कर्त्ता क्रियायाः प्रणाशान्न केवलमभीष्टं तत्फलं न लभेत यावदप्रार्थितमप्यनर्थं विषयमासादयेत् तथा सत्यपि कार्य्यस्य कारणरूपानुकारे यत्तयोर्गुणौ क्रिये च परस्परविरुद्धतां व्रजतः स समविपर्य्ययात्मा चतूरूपोविषमः॥ क्रमेणोदाहरणं॥

शिरीषादपि मृद्वङ्गी केयमायतलोचना। अयं क्वचकुकूलाग्निकर्कशोमदनानलः॥ सिंहिकासुतसन्त्रस्तः शशः शीतांशुमाश्रितः। जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः॥ सद्यःकरस्पर्शमवाप्यचित्रं रणे रणे यस्य कृपाणलेखा। तमालनीला शरदिन्दुपाण्डुयशस्त्रिलोक्याभरणं प्रसूते॥ आनन्दममन्दमिमं कुवलयदललोचने ददामि त्वं। विरहस्त्वयैव जनितस्तापयतितरां शरीरम्मे॥

अत्रानन्ददानं शरीरतापेन विरुध्यते एवं॥

विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये। मदविभ्रमासकलया पपे पुनः सपुरस्त्रियैकतमयैकया दृशा ॥

इत्यादावपि विषमत्वं यथायोगमवगन्तव्यं। महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात्। आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकन्तु तत्। आश्रितमाधेयं आश्रयस्तदाधारः तयोर्महतोरपि विषये तदपेक्षया तनू अप्याश्रयाश्रयिणौ प्रस्तुतवस्तुप्रकर्षविवक्षया यथाक्रमं यदधिकतरतां व्रजतस्तदिदं द्विविधं अधिकं नाम। क्रमेणोदाहरणं ॥

अहो विशालं भूपालभुवनत्रितयोदरं। माति मातुमशक्यापि यशोराशिर्यदत्र ते॥ युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत। तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः॥ प्रतिपक्षमशक्तेन प्रतिकर्त्तुं तिरस्क्रिया। या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते॥

न्यक्कृतिपरमपि विपक्षं साक्षान्निरसितुमशक्तेन केनापि यत्तमेव प्रतिपक्षमुत्कर्षयितुं तदाश्रितस्य तिरस्करणं तदनीकप्रतिनिधितुल्यत्वात्प्रत्यनीकमभिधीयते। यथानीकेऽभियोज्ये तत्प्रतिनिधीभूतमपरं मूढतया केनचिदभियुज्यते तथेह प्रति

योगिनि विजेये तदीयोन्योविजीयत इत्यर्थः॥ उदाहरणं॥

त्वं विनिर्जितमनोभवरूपः सा च सुन्दरभवत्यनुरक्ता। पञ्चभिर्युगपदेव शरैस्त्वां तापयत्यनुशयादिव कामः॥ यथा॥

यस्य किञ्चिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः। कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते॥

इन्दोरत्रतदीयतासम्बन्धिमुखसम्बन्धात्। समेन लक्ष्मणावस्तु वस्तुना यन्निगूह्यते। निजेनागन्तुना वापि तन्मीलितमिति स्मृतम्। सहजमागन्तुकं वा किमपि साधारणं यल्लक्षणं तद्द्वारेण किञ्चित्केन चिद्वस्तु स्थित्यैव वलीयस्तया तिरोधीयते तन्मीलितमिति द्विधा स्मरन्ति॥ क्रमेणोदाहरणं॥

अपाङ्गतरले दृशौ मधुरवक्रवर्णागिरोविलासभरमन्थरा गतिरतीव कान्तं मुखं। इतिस्फुरितमङ्गके मृगदृशः स्वतो लीलया तदत्र न मदोदयः कृतपदोपि संलक्ष्यते॥

अत्रहक्तरलतादिकमङ्गस्य लिङ्गं स्वाभाविकं साधारणञ्च मदोदयेन तत्राप्येतस्य दर्शनात्॥

ये कन्दरासु निवसन्ति सदा हिमाद्रेस्त्वत्पातशङ्कितधियो विवशाद्विषस्ते। अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं तेषामहोवत भियां नवुधोप्यभिज्ञः॥

अत्र तु सामर्थ्यादवसितस्य शैत्यस्यागन्तुकत्वा त्तत्प्रभवयोरपि कम्पपुलकयोस्ताद्रूप्यं समानता भयेष्वपि तयोरुपलक्षितत्वात्। स्थाप्यतेऽपोह्यते वापि यथापूर्व्वं परम्परं। विशेषणतया यत्र वस्तु सैकावलीद्विधा। पूर्व्वंपूर्व्वं प्रति यत्रोत्तरोत्तरस्य वस्तुनोवीप्सया विशेषणभावेन यत् स्थापनं निषेधोवा सम्भवति सा द्विधा वुधैरेकावली भण्यते॥ क्रमेणोदाहरणं॥

पुराणि यस्यां सवराङ्गनानि वराङ्गनारूपपुरस्कृताङ्गः रूपं समुन्मीलित सद्विलासमस्त्रं विलासाः कुसुमायुधस्य। नतज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदं न षट्पदोसौ कलगुञ्जितोन योन गुञ्जितं तन्न जहार यन्मनः॥

पूर्व्वत्र पुराणां वराङ्गनास्तासामङ्गविशेषण मुखेन रूपं तस्य विलासास्तेषामप्यस्त्रमित्यमुना क्रमेण विशेषणं विधीयते उत्तरत्र प्रतिषेधेप्येवं योज्यं। यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः। स्मरणं यः पदार्थः केनचिदाकारेण नियतोयदा कदाचिदनुभूतोभूत्स कालान्तरे स्मृतिप्रबोधाधायिनि तत्समाने वस्तुनि दृष्टे सति यत्तथैव स्मर्य्यते तद्भवेत्स्मरणं॥ उदाहरणं॥

निम्ननाभिकुहरेषु यदम्भःप्लावितं चलदृशां लहरीभिः।
तद्भवैः कुहरुतैः सुरनार्य्यः स्मारिताः सुरतकण्ठरुतानाम्॥

यथा वा। करजुअ गहिअ जसोआथणमुहे णिवेसिआधरपुड
स्स सभरिअ पञ्चजस्सणमहकरुस्सरोमञ्चं॥

भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने तदित्यन्यद
प्राकरणिकं निर्दिश्यते तेन समानमर्थादिह प्राक
रणिकमाश्रीयते तस्य तथाविधस्य दृष्टौ सत्यां यद
प्राकरणिकतया सम्वेदनं स भ्रान्तिमान् नचैष
रूपकं प्रथमातिशयोक्तिर्वा तत्र वस्तुतोभ्रमस्याभा
वात् इह चार्थानुगमनेन संज्ञायाप्रवृत्तेस्तस्य स्पष्ट
मेव प्रतिपन्नत्वात्॥ उदाहरणम्॥

कपाले मार्जारः पय इति कराल्लेढि शशिनस्तरुच्छिद्रप्रोता
न्बिसमिति करी संकलयति। रतान्ते तल्पस्थान्हरति वनिता
प्यंशुकमिति प्रभामत्तश्चन्द्रोजगदिदमहो विप्लवयति॥

आक्षेप उपमानस्य प्रतीपमुपमेयता तस्यैव
यदि वा कल्प्यातिरस्कारनिबन्धनं अस्यधुरं सुत
रामुपमेयमेव वोढुं प्रौढमिति कैमुत्येन यदुपमान
माक्षिप्यते यदपि तस्यैवोपमानतया प्रसिद्धस्योपमा
नान्तरविवक्षयाऽनादरार्थमुपमेयभावः कल्प्यते

तदुपमेयस्योपमान प्रतिकूलवर्त्तित्वादुभयरूपं प्रतीपं ॥ क्रमेणोदाहरणं ॥

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा । इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥ एएहि दावसुन्दरि कण्णं दाऊणसुण सुवअणिज्जं । तुज्झमुहेण किसोअरि चन्दो उपमिज्जइ जणेण ॥

अत्र मुखेनोपमीयमानस्य शशिनः स्वल्पतर गुणत्वादुपमित्यनिष्पत्त्या वअणिज्जमिति वचनीय पदाभिव्यङ्ग्यस्तिरस्कारः क्वचित्तु निष्पन्नैवोपमिति क्रियाअनादरनिबन्धनं यथा ॥

गर्व्वमसवाह्यमिमं लोचनयुगलेन किं वहसि मुग्धे । सन्तीदृशानि दिशि दिशि सरःसु ननुनीलनलिनानि ॥

इहोपमेयीकरणमेवोत्पलानामनादरः अनयैव रीत्या यदसामान्यगुणयोगान्नोपमानभावमप्यनुभूतपूर्व्वंतस्य तत्कल्पनायामपि भवति प्रतीपमिति प्रत्येतव्यं ॥ यथा ॥

अहमेव गुरुः सुदारुणानामिति हालाहलतातमास्म दृष्यः। ननु सन्ति भवादृशानि भूयोभुवनेस्मिन् वचनानि दुर्जनानां ॥

अत्र हालाहलस्योपमानत्वमसम्भाव्यमेवोपनिबद्धं। प्रस्तुतस्य यदा येन गुणसाम्यविवक्षया ऐकात्म्यंबध्यते योगात्तत्सामान्यमिति स्मृतम्। अतादृशमपि तादृशतया विवक्षितुं यदप्रस्तुतार्थेन संपृक्तमपरित्यक्तनिजगुणमेव तदेकात्मतया निबध्यते तत्समानगुणनिबन्धनात्सामान्यम्॥ उदाहरणं॥

मलयजरसविलिप्ततनवोनवहारलताविभूषिताः सिततरदन्तपत्रकृतवक्त्ररुचोरुचिरामलांशुकाः। शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः॥

अत्र प्रस्तुतनदन्ययोरन्यूनानतिरिक्ततया निबद्धं धवलत्वमेकात्मताहेतुः अतएव पृथग्भावेनानतयोरुपलक्षणं॥ यथा वा॥

वेत्रत्वचा तुल्यरुचां बधूनां कर्णाग्रतोगण्डतलागतानि। भृङ्गाः सहेलं यदि नापतिष्यन् कोवेदयिष्यन्नवचम्पकानि॥

अत्र निमित्तान्तरजनितापि नानात्वप्रतीतिः। प्रथमप्रतिपन्नमभेदं न व्युदसितुमुत्सहते प्रतीतत्वा

त्तस्य प्रतीतेश्च बाधायोगात् विना प्रसिद्धमाधार माधेयस्य व्यवस्थितिः। एकात्मा युगपद्वृत्तिरेकस्या नेकगोचरा। अन्यत्प्रकुर्व्वतः कार्य्यमशक्यस्यान्य वस्तुनः तथव करणंचेति विशेषस्त्रिविधः स्मृतः। प्रसिद्धाधारपरिहारेण यदाधेयस्य विशिष्टा स्थिति रभिधीयते स प्रथमोविशेषः ॥ उदाहरणं ॥

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषां। रमयन्ति जगन्ति गिरः कथमिह कवयोन ते वन्द्याः ॥

एकमपि वस्तु यदेकेनैव स्वभावेन युगपदने कत्र वर्त्तते सद्वितीयः ॥ उदाहरणं ॥

सालसद्दतुज्झहिअए साचेअ अच्छीसुसाअ वअणेसु। अम्हा रिसाणंसुन्दरओवासोणत्थिपावाणं ॥

यदपि किञ्चिद्रभसेनारभमाणस्तेनैव यत्नेना शक्यमपि कार्य्यान्तरमारभते सोपरोविशेषः ॥ उदा हरणं ॥

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यं। विधिना ससृजे नवोमनोभूर्भुवि सत्यं सविता वृहस्पतिश्च ॥ यथावा ॥ गृहिणीसचिवः सखीमिथः प्रियशिष्या ललिते कलाविधौ। करु णाविमुखेन मृत्युना हरता त्वां वद किन्न मे हृतम् ॥

सर्व्वत्रैवंविधविषयेऽतिशयोक्तिरेव प्राणत्वेना वतिष्ठते तां विना प्रायेणालङ्कारत्वायोगात् अतएवोक्तं। सैषा सर्व्वत्र वक्रोक्तिरनयार्थो विभाव्यते। यत्नोऽस्यां कविना कार्य्यः कोऽलङ्कारोनया विनेति॥

स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत्। वस्तु तद्गुणतामेति भण्यते सतु तद्गुणः। वस्तुतिरस्कृत निजरूपं केनापि समीपगतेन प्रगुणतया स्वगुण संपदोपरक्तं तत्प्रतिभासमेव यत्समासादयति स तद्गुणः तस्याप्रकृतस्य गुणोत्रास्तीति॥ उदाहरणं॥

विभिन्नवर्णा गरुडाग्रजेन सूर्य्यस्य रथ्याः परितःस्फुरन्त्या रत्नैः पुनर्यत्र रुचारुचं स्वामानिन्यिरे वंशकरीरनीलैः॥

अत्र रवितुरगापेक्षया गरुडाग्रजस्य तदपेक्षया च हरिन्मणीनां प्रगुणवर्णता तद्रूपाननुहारश्चेदस्यतत्स्यादतद्गुणः यदि तु तदीयं वर्णं सम्भवन्त्यामपि योग्यतायामिदंन्यूनगुणं न गृह्णीयात्तदा भवेदतद्गुणोनाम॥ उदाहरणं॥

धवलोसि जहविसुन्दर तहवि तुए मज्झरंजिअं हिअअं। राअभरिए विहिअए सुहअणि हित्तोण रत्तोसि॥

अत्रातिरक्तेनापि मनसा संयुक्तोन रक्ततामुपगत इत्यतद्गुणः किञ्च तदित्यप्रकृतमस्येतिच

प्रकृतमत्र निर्दिश्यते तेन यदप्रकृतस्य रूपं प्रकृतेन कुतोपि निमित्तान्नानुविधीयते सोऽतद्गुण इत्यपि प्रतिपत्तव्यं ॥ यथा ॥

गाङ्गमम्बुसितमम्बुयामुनं कज्जलाभमुभयत्र मज्जतः। राजहंस तव सैव शुभ्रता चीयते नच नचापचीयते ॥

यद्यथा साधितं केनाप्यपरेण तदन्यथा तथैव यद्विधीयेत सव्याघात इति स्मृतः। येनोपायेन यदेकेनोपकल्पितं तस्यान्येन जिगीषुतया तदुपायकमेव यदन्यथाकरणं स स्वसाधितवस्तुव्याहतिहेतुत्वाद्व्याघातः ॥ उदाहरणं ॥

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः। विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥

सैषासंसृष्टिरेतेषा भेदेनयदिह स्थितिः। एतेषां समनन्तरमेवोक्तस्वरूपाणां यथासम्भवमन्योन्यनिरपेक्षतया यदिह शब्दभाग एव अर्थविषय एवोभयत्रापि वावस्थानं सैकार्थसमवायस्वभावा संसृष्टिः तत्र शब्दालङ्कारसंसृष्टिः ॥

वदनसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया। चलितया विदधे कलमेखलाकलकलोलकलोलदृशान्यया ॥

अर्थालङ्कारसंसृष्टिः ॥

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः। असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता॥

पूर्व्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः उत्तरत्र तु तथाविधे उपमोत्प्रेक्षे शब्दार्थालङ्कारयोः संसृष्टिः॥

सोणत्थि एत्थ गामे जो एअं महमहन्तलाअखं। तरुणाणंहिअअलुडिंपरिसप्पन्तीं णिवारेइ॥

अत्रानुप्रासोरूपकञ्चान्योन्यानपेक्षे संसर्गश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात्। अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वन्तु सङ्करः।एतएव यत्रात्मन्यनासादितस्वतन्त्रभावाः परस्परमनुग्राह्यानुग्राहकतां दधति स एषां सङ्कीर्य्यमाणस्वरूपत्वात्संकरः॥ उदाहरणं॥

आत्ते सीमन्तचिह्ने मरकतिनिहते हेमताटङ्कपत्रे लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते। शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये राजन् गुञ्जाफलानां स्रजइति शवरा नैव हारं हरन्ति॥

अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतं तदाश्रयेण च तद्गुणः सचेतसां प्रभूतचमत्कृतिनिमित्तमित्यनयोरङ्गाङ्गिभावः॥ यथावा॥

जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो वियोगिव्यापत्तेरिव कलितवैराग्यविशदः। परिप्रेङ्खत्तारापरिकरकपालाङ्किततले शशीभस्मापाण्डुः पितृवनइव व्योम्नि चरति॥

उपमारूपकमुत्प्रेक्षाश्लेषश्चेति चत्वारोऽत्र पर्व्ववदङ्गाङ्गितया प्रतीयन्ते कलङ्कएवाक्षवलयमिति रूपकपरिग्रहे करधृतत्वमेव साधकप्रमाणतां प्रतिपद्यते। अस्य हि रूपकत्वे तिरोहितकलङ्करूपमक्षवलयमेव मुख्यतयावगम्यते। तस्यैव च करग्रहणयोग्यतायां सार्व्वत्रिकी प्रसिद्धिः श्लेषछायया तु कलङ्कस्य करधारणमसदेव प्रत्यासत्त्योपचर्य्य योज्यते शशाङ्केन केवलं कलङ्कस्य मूर्त्त्यैवोद्वहनात् कलङ्कोक्षवलयमिवेति तूपमायां कलङ्कस्योत्कटतयाप्रतिपत्तिः नचास्य करधृतत्वं तत्त्वतोस्तीति मुख्येप्युपचार एव शरणं स्यात् एवंरूपश्च सङ्करः शब्दालङ्कारयोरपि परिदृश्यते॥ यथा॥

राजति तटीयमभिहत दानवरासातिपातिसारावनदा।
गजताच यूथमविरतदानवरासातिपातिसारावनदा॥

अत्र यमकमनुलोमप्रतिलोमश्च चित्रभेदः पादद्वयगते परस्परापेक्षे। एकस्यच शद्वेन्यायदोषाभावादनिश्चयः द्वयोर्बहूनां वालङ्काराणामेकत्र

समावेशे विरोधाद्यत्र युगपदवस्थानं नचैकत मस्ति येनैकतर एव परिगृह्येत स निश्चयाभाव रूपोद्वितीयः सङ्करः समुच्चयेन सङ्करस्यैवाचेपात्॥

उदाहरणं॥

जहगहिरोजहरअणणिभरोजहअणिम्मलच्छाओ। तहकिं विहिणाएसो सरसवाणिओ जलणिहीणकिओ॥

अत्र समुद्रे प्रस्तुते विशेषणसाम्यादप्रस्तुतार्थ प्रतीतेः किमसौ समासोक्तिः किमब्धेरप्रस्तुतस्य मुखेन कस्यापि तत्समगुणतया प्रस्तुतस्य प्रतीते रियमप्रस्तुतप्रशंसेति सन्देहः॥ यथावा॥

नयनानन्ददायीन्दोर्विम्बमेतत्प्रसीदति। अधुना विनि रुद्धाशमविशीर्णमिदन्तमः॥

अत्र किं कामस्योद्दीपकः कालोवर्त्तत इति भङ्ग्य न्तरेणाभिधानात्पर्य्यायोक्तमुत तद्दनस्येन्दुविम्ब तयाध्यवसानादतिशयोक्तिः किंवैतदिति वक्त्रं निर्दिश्य तद्रूपारोपवशाद्रूपकं अथवा तयोः समु च्चयविवचायां दीपकं अथवा तुल्ययोगिता किमु प्रदोषसमये विशेषणसाम्यादाननस्यावगतौ समा सोक्तिः आहोस्विन्मुखनैर्मल्यप्रस्तावादप्रस्तुतप्रशं सेति वहूनां सन्देहादयमेव सङ्करः यत्रतु न्यायदो

षयोरन्यतरस्यावतारस्तत्रैकतरस्य निश्चयान्न संशयः न्यायश्च साधकत्वमनुकूलता दोषोपि बाधकत्वं प्रतिकूलता तत्र सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेवहासद्युतिरित्यत्र मुख्यतयावगम्यमानाहासद्युतिर्वक्त्रएवानुकूल्यं भजते इत्युपमायाः साधकं शशिनितु न तथाप्रतिकूलेति रूपकंप्रति तस्याऽबाधकता वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यत इत्यत्रापरत्वमिन्दोरनुगुणं नतु वक्त्रस्य प्रतिकूलमितिरूपकस्य साधकतां प्रतिपद्यतेनतूपमाया बाधकतां राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरमित्यत्र पुनरालिङ्गनमुपमां निरस्यति सदृशं प्रति प्रेयसीप्रयुक्तस्यालिङ्गनस्यासम्भवात् पादाम्बुजं भवतुनोविजयाय मञ्जुमञ्जीरसिञ्जितमनोहरमम्बिकाया इत्यत्र मञ्जीरसिञ्जितमम्बुजे प्रतिकूलमसम्भवादिति रूपकस्य बाधकं नतु पादेऽनुकूलमित्युपमायाः साधकमभिधीयते विध्युपमर्दिनोबाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेः एवमन्यत्रापि सुधीभिः परीक्ष्यं॥ स्फुटमेकत्रविषये शब्दार्थालङ्कारस्य परिग्रहे साधकं तदितरस्य परिहारे बाधके

तिद्वयं व्यवस्थितञ्च अभिन्नएव पदे स्फुटतया यदु भावपि शब्दार्थालङ्कारौ व्यवस्थां समासादयतः सोप्यपरः सङ्करः ॥ उदाहरणं ॥

स्पष्टोल्लसत्किरणकेसरसूर्य्यविम्बविस्तीर्णकर्णिकमथोदिवसारविन्दं। स्लिष्टाष्टदिग्दलकलापमुखावतारवद्धान्धकारमधुपावलिसंचुकोच ॥

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ तेनासौत्रिरूपः परिकीर्त्तितः तदयमनुग्राह्यानुग्राहकतया संदेहेनैकपदप्रतिपाद्यतया व्यवस्थितत्वात्त्रिप्रकारएव सङ्करोव्याकृतः प्रकारान्तरेणतु न शक्योव्याकर्त्तमानन्त्यात्तत्प्रभेदानामिति प्रतिपादिताःशब्दार्थोभयगतत्वेन त्रैविध्यजुषोलङ्काराः कुतः पुनरेष नियमोयदेतेषां तुल्येपि काव्यशोभातिशयहेतुत्वे कश्चिदलङ्कारः शब्दस्य कश्चिदर्थस्य कश्चिच्चोभयस्येति चेत् उक्तमत्र यथा काव्ये दोषगुणालङ्काराणां शब्दार्थोभयगतत्वेन व्यवस्थायामन्वयव्यतिरेकावेव प्रभवतोनिमित्तान्तरस्याभावात् ततश्च योलङ्कारोयदीयावन्वयव्यतिरेकावनुविधत्ते सतदलङ्कारोव्यवस्थाप्यतइति एवञ्च यथा पुनरुक्तवदाभासः परम्परितरूपकं चोभयोर्भावाभावान

विधायितयोभयालङ्कारौ। तथा शब्दहेतुकार्थान्तरन्यासप्रभृतयोपि द्रष्टव्याः अर्थस्यतु तत्रैव वैचित्र्यमुत्कटतया प्रतिभासत इतिवाच्यालङ्कारमध्ये वस्तुस्थितिमनपेक्ष्यैव लक्षिताः योलङ्कारोयदाश्रितः स तदलङ्कारइत्यपि कल्पनायामन्वयव्यतिरेकावेव समाश्रयितव्यौ। तदाश्रयणमन्तरेण विशिष्टस्याश्रयाश्रयिभावस्याभावादित्यलङ्काराणां यथोक्तनिमित्तएव परस्परव्यतिरेकोज्यायान् एषां दोषा यथायोगं सम्भवन्तोपि केचन उक्तेष्वन्तर्भवन्तीति न पृथक्प्रतिपादिताः तथाह्यनुप्रासस्य प्रसिद्ध्यभावोवैफल्यं वृत्तिविरोध इति ये त्रयोदोषास्ते प्रसिद्धिविरुद्धतामपुष्टार्थत्वं प्रतिकूलवर्णताञ्च यथाक्रमं न व्यतिक्रामन्ति तत्स्वभावत्वात्॥ क्रमेणोदाहरणं॥

चक्रीचक्रारपङ्क्तिंहरिरपि च हरीन् धूर्जटिर्धूर्ध्वजान्तानक्षं नक्षत्रनाथोरुणमपि वरुणः कूवराग्रं कुबेरः। रंहःसङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोन्वहमहिमरुचेः सोऽवतात्स्यन्दनोवः॥

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिरनुप्रासानुरोधेनैव कृता न पुराणेतिहासादिषु तथाप्रतीतेति प्रसिद्धिविरोधः ॥

भणतरुणिरमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि यदि सल्लीलोल्लापिनि गच्छसि तत्किं त्वदीयं मे। अनणुरणन्मणिमेखलमविरतसिञ्जानमञ्जुमञ्जीरं परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥

अत्र वाच्यस्य विचिन्त्यमानं न किञ्चिदपि चारुत्वं प्रतीयत इत्यपुष्टार्थतैवानुप्रासस्य वैफल्यम् ॥

अकुण्ठोत्कण्ठेति ॥

अत्र शृङ्गारे परुषवर्णाडम्बरः पूर्वोक्तरीत्या विरुध्यतइति परुषानुप्रासोऽत्र प्रतिकूलवर्णतैव वृत्तिविरोधः यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तत्वं दोषः ॥ यथा ॥

भुजङ्गमस्येव मणिः सदम्भाग्राहावकीर्णेव नदी सदम्भाः।
दुरन्ततांनिर्णयतोपिजन्तोः कर्षन्ति चेतः प्रसभंसदम्भाः ॥

उपमायामुपमानस्य जातिप्रमाणगतन्यूनत्वमधिकता वा तादृश्यनुचितार्थत्वं दोषः धर्माश्रयेतु न्यूनाधिक्ये यथाक्रमं हीनपदत्वमधिकपदत्वञ्च न व्यभिचरतः ॥ क्रमेणोदाहरणं ॥

चाण्डालैरिव युष्माभिः साहसं परमं कृतं। वह्निस्फुलिङ्ग इव भानुरयं चकास्ति। अयंपद्मासनासीनश्चक्रवाकोविराजते। युगादौ भगवान्वेधा विनिर्मित्सुरिव प्रजाः। पातालमिव तेनाभिस्तनौ चितिधरोपमौ। वेणीदंडःपुनरयं कालिन्दीपात्रसन्निभः॥

अत्र चाण्डालादिभिरुपमानैः प्रस्तुतोर्थोऽत्यर्थमेव कदर्थित इत्यनुचितार्थता॥

समुनिर्लाञ्छितोमौञ्ज्याकृष्णाजिनपटंवहन्। व्यराजन्नीलजीमूतभागाश्लिष्टइवांशुमान्॥

अत्रोपमानस्य मौञ्जीस्थानीयस्तडिल्लक्षणो धर्म्मः केनापि पदेन न प्रतिपादित इति हीनपदत्वं॥

स पीतवासाः प्रगृहीतशार्ङ्गोमनोज्ञभीमं वपुराप कृष्णः। शतह्रदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः॥

अत्रोपमेयस्य शङ्खादेरनिर्देशे शशिनोग्रहणमतिरिच्यते इत्यधिकपदत्वं लिङ्गवचनभेदोप्युपमानोपमेययोः साधारणं चेद्धर्म्ममन्यरूपं कुर्य्यात् तदेकतरस्यैव तद्धर्म्मसमन्वयावगतेः सविशेषण

स्यैव तस्योपमानत्वमुपमेयत्वं वा प्रतीयमानेन धर्म्मेणप्रतीयत इति प्रक्रान्तस्यार्थस्य स्फुटम निर्वाहादस्य भग्नप्रक्रमरूपत्वं ॥ यथा ॥

चिन्तारत्नमिव च्युतोसि करतोधिग्मन्दभाग्यस्य मे। सक्तोभचितादेव शुद्धाः कुलवधूरिव ॥

यत्रतु नानात्वेपि लिङ्गवचनयोः सामान्याभिधायिपदं स्वरूपभेदं नापद्यते न तत्रैतद्दूषणावतारः। उभयथाप्यस्यानुगमक्षमस्वभावत्वात् ॥ यथा ॥

गुणैरनर्घैः प्रथितोरत्नैरिव महार्णवः। तद्देशोसदृशो ऽन्याभिः स्त्रीभिर्मधुरताभृतः। दधतेस्म परांशोभां तदीया विभ्रमाइव ॥

कालपुरुषविध्यादिभेदेपि न तथाप्रतीतिरस्खलितरूपतया विश्रान्तिमासादयतीत्यसावपि भग्नप्रक्रमतयैव व्याप्तः ॥ यथा ॥

अतिथिन्नामकाकुत्स्थात्पुत्रमाप कुमुद्वती। पश्चिमायामिनी यामात्प्रसादमिव चेतना ॥

अत्र चेतनाप्रसादमाप्नोति न पुरापेति कालभेदः ॥

प्रत्यग्रमज्जनविशेषविविक्तमूर्त्तिः कौसुम्भरागरुचिरस्फुर दंशुकान्ता। विभ्राजसे मकरकेतनमर्चयन्ती बालप्रवालविटप प्रभवा लतेव ॥

अत्र लताविभ्राजते नतु विभ्राजसइति संबोध्यमाननिष्ठस्य परभागस्यासंबोध्यमानविषयतया व्यत्यासात्पुरुषभेदः गङ्गेव प्रवहतु ते सदैवकीर्त्तिरित्यादौ च गङ्गा प्रवहत्विति अप्रवृत्तप्रवर्त्तनात्मनोविधेः एवं जातीयकस्य चान्यस्यार्थस्योपमा नगतस्यासम्भवाद्विध्यादिभेदः ननु समानमुच्चारितं प्रतीयमानं धर्म्मान्तरमुपादाय पर्य्यवसितायामुपमायामुपमेयस्य प्रकृतधर्म्माभिसम्बन्धान्न कश्चित्कालभेदोस्ति यत्राप्युपात्तेनैव सामान्यधर्म्मेणोपमावगम्यते यथा युधिष्ठिरइवायं सत्यं वदतीति तत्र युधिष्ठिरइव सत्य वाद्ययं सत्यंवदतीति प्रतिपत्त्या मद्देसत्यवादी सत्यंवदतीति चन पौनरुक्त्यमाशङ्कनीयं स्वपोषं पुष्णातीतिवत् युधिष्ठिरइव सत्य वदनेन सत्यवाद्ययमित्यर्थावगमात् सत्यमेवैतत् किंतुस्थितेषु प्रयोगेषु समर्थनमिदं नतु सर्व्वथा निरवद्यं प्रस्तुतवस्तु प्रतीतिविघातादिति सचेतस

एवात्र प्रमाणं असादृश्यासम्भवावप्युपमायामनु चितार्थतायामेव पर्य्यवस्यतः ॥ यथा ॥

ग्रथ्नाति काव्यशशिनं विततार्थरश्मिं ॥

अत्र काव्यस्य शशिनार्थानाञ्च रश्मिभिःसाधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थं ॥

निपेतुरास्यादिव तस्य दीप्ताः शराधनुर्मण्डलमध्यभाजः।
जाज्वल्यमाना इव वारिधारा दिनार्द्धभाजःपरिवेषिणोर्कात्॥

अत्रापि ज्वलन्त्योम्बुधाराः सूर्य्यमण्डलान्निष्पत न्त्योन सम्भवन्तीत्युपनिबध्यमानोर्थोनौचित्यमेव पुष्णाति उत्प्रेक्षायामपि सम्भावनं ध्रुवेवादयएव शब्दावक्तुमुत्सहन्ते न यथाशब्दोपि केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं पर्य्याप्तत्वात्तस्य चास्याम विवक्षितत्वादिति तत्राशक्तिरस्यावाचकत्वं दोषः॥ यथा॥

उद्ययौ दीर्घिकागर्भात्मुकुलं मेचकोत्पलं। नारीलोचन चातुर्य्यशङ्कासंकुचितं यथा ॥

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वा न्निरुपाख्यप्रख्यं तत्समर्थनाययदर्थान्तरन्यासोपा दानं तदालेख्यमिव गगनतलेऽत्यन्तमसमीचीन

मिति निर्व्विषयत्वमेतस्यानुचितार्थतैव दोषः ॥ यथ ॥

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारं
क्षुद्रेपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसामतीव ॥

अत्राचेतनस्य तमसोदिवाकरात्त्रासएव न सम्भवतीति कुतएव तत्प्रयोजितमद्रिणा परित्राणं सम्भावितेन तु रूपेणप्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थएव तत्समर्थनायां यत्नः साधारणविशेषणवशादेव समासोक्तिरनुक्तमप्युपमानविशेषं प्रकाशयतीति तस्यात्र पुनरुपादाने प्रयोजनाभावादनुपादेयता यत्तदपुष्टार्थत्वं पुनरुक्तता वा दोषः ॥ यथा ॥

स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया ।
अतनुमानपरिग्रहयास्थितं रुचिरया चिरया दिवसश्रिया ॥

अत्र तिग्मरुचेः ककुभाञ्च यथासङ्ख्यविशेषणवशेन व्यक्तिविशेषपरिग्रहेण च नायकतया नायिकतयाच व्यक्तिस्तथा ग्रीष्मदिवसश्रियोपि प्रतिनायिकात्वं भविष्यतीति किन्दयितयेति स्वशब्दोपादानेन श्लेषोपमायास्तु सविषयोयत्रोपमानस्योपा

दानमन्तरेण साधारणेष्वपि विशेषणेषु न तथा प्रतीतिः ॥ यथा ॥

स्वयञ्चपल्लवाताम्रभास्वत्करविराजिता। प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदेति ॥

अप्रस्तुतप्रशंसायामप्युपमेयमनयैव रीत्या प्रतीतं न पुनः प्रयोगेण कदर्थतां नेयं यथा ॥

आहूतेषु विहङ्गमेषु मशकोनायान्पुरोवार्यते मध्ये वारिधिवावसंस्तृणमणिर्धत्तेमणीनांरुचम्। खद्योतोपि न कम्पते प्रचलितुं मध्येपि तेजस्विनां धिक्सामान्यमचेतनं प्रभुमिवानाम्टष्टतत्वान्तरं ॥

अत्राचेतनस्य प्रभोरप्रस्तुत विशिष्टसामान्यद्वारेणाभिव्यक्तौ न युक्तमेव पुनःकथनम् तदेतेऽलङ्कारदोषा यथासम्भविनोन्येप्येवं जातीयकाः पूर्व्वोक्तयैवदोषजात्यान्तर्भाविता न पृथक्प्रतिपादनमर्हन्तीति संपर्णमिदंकाव्यलक्षणम् ॥

इतिकाव्यप्रकाशेऽर्थालङ्कारनिर्णयोनाम दशमउल्लासः ॥

—

